ईस्सरे चेव महि-स्सरे चेव, दो कंदिदा पं० तं०-सुवत्थे चेव विसाले चेव, दो महाकंदिदा पन्नत्ता, तं०-हस्से चेव हस्सरई चेव, दो कुम्भं(कोहं)डिंदा पं० तं०-सेए चेव महासेए चेव, दो पयइंदा पं० तं०-पयए चेव पयगवए(ई)चेव।" एवमेतेऽपि सर्वे षोडश, अत एव च विंशतेर्भवनपतीन्द्राणां द्वात्रिंशतो व्यन्तरेन्द्राणां असंख्यातत्वेऽपि चन्द्रार्काणां जातिमाश्रयणात् द्वयोश्चन्द्रसूर्ययोर्ज्योतिष्केन्द्रयोर्दशानां च सौधर्मादिकल्पेन्द्राणां मीलने चतुःषष्टिरिन्द्राः ६४ ॥३५–३६॥

सम्प्रति व्यन्तरेन्द्राणां तत्तुल्यवक्तव्यत्वाच्चन्द्रार्काणां च सामानिकात्मरक्षकांश्चाह—

सामाणिआण चउरो, सहस्स सोलस य आयरक्खाणं ।
पत्तेअं सव्वेसिं, वंतरवइ ससिरवीणं च ॥ ३७ ॥

सुगमा ॥ ३७ ॥ उक्ता सप्रसङ्गं व्यन्तरनगरवक्तव्यता, सम्प्रति ज्योतिष्कविमानवक्तव्यताऽवसरः, ते च ज्योतिष्कास्तिर्यग्लोके, स चाष्टादशयोजनशतोच्छ्रितः, तत्र कियद्दूरे चन्द्रादिविमानानि भवन्तीत्यत आह—

समभूतलाउ अठहिं, दसूणजोअणसएहिं आरब्भ ।
उवरि दसुत्तरजोअणसयंमि चिट्ठंति जोइसिआ ॥ ३८ ॥

व्याख्या—समान्मेरुमध्यस्थिताष्टप्रदेशात्मकरुचकसमानाद्भूतलादष्टाभ्यो दशोनेभ्यो योजनशतेभ्य आरभ्य उपरि-दशोत्तरे योजनशते ज्योतिष्कास्तिष्ठन्ति ॥ ३८ ॥ एषामेवावस्थानविभागमाह—

तत्थ रवी दसजोअण, असीइ तदुवरि ससी उ रिक्खेसु ।
अह भरणि साइ उवरि, बहि मूलोऽभिंतरे अभिई ॥ ३९ ॥

व्याख्या—'तत्र' तस्मिन् दशोत्तरे योजनशते ज्योतिश्चक्रस्य सर्वाधस्तनतलादूर्ध्वं दशभिर्योजनैः समभूतलापेक्षयाऽष्टभिर्योजनशतैरित्यर्थः । तथा 'रिक्खेसु'त्ति सर्वेषामपि नक्षत्राणामधो भरणी नक्षत्रं चारं चरति । एवं स्वातिः सर्वेषामुपरि, मूलं सर्वेषां बहिः, अभिजित् सर्वेषामभ्यन्तर इति । अन्यत्र तु यद्यपि सामान्येन 'सव्वब्भिंतरभीई' इत्याद्युक्तं, तथापि तदपि नक्षत्रमण्डलापेक्षया द्रष्टव्यं । तथाच जम्बूद्वीपप्रज्ञप्तिः—"जंबूद्दीवेणं भंते ! दीवे अट्ठावीसाए नक्खत्ताणं कयरे नक्खत्ते सव्वब्भिंतरं चारं चरइ ? कयरे नक्खत्ते सव्वबाहिरं चारं चरइ ? कयरे नक्खत्ते सव्वहेट्ठिल्लं चारं चरइ ? कयरे नक्खत्ते सव्वुवरिल्लं चारं चरइ ? गोयमा ! अभीई नक्खत्ते सव्वब्भिंतरं चारं चरइ, मूलो सव्वबाहिरं चारं चरइ, भरणी सव्वहेट्ठिल्लं चारं चरइ, साई सव्वुवरिल्लं चारं चरइ" इति । अत्र केचिदाहुः—"शतानि सप्त गत्वोर्ध्वं, योजनानां भुवस्तलात् । नवतिं च स्थितास्तारा:, सर्वाधस्तान्नभस्तले ॥ १ ॥ तारकापटलाद्गत्वा, योजनानि दशोपरि । सूर्याणां पटलं तस्मादशीतिं शीतरोचिषाम् ॥ २ ॥ चत्वारि तु ततो गत्वा, नक्षत्रपटलं स्थितम् । गत्वा ततोऽपि चत्वारि,

बुधानां पटलं भवेत् ॥३॥ शुक्राणां च गुरूणां च, भौमानां मन्दसंज्ञिनाम् । त्रीणि त्रीणि च गत्वोर्ध्वं, क्रमेण पटलं स्थितम् ॥४॥ अमीषां मीलने जातं दशोत्तरं शतं योजनानां ११० इत्यादि" गंधहस्ती त्वाह—"मूर्याणामधस्तान्मङ्गलाश्चरन्तीति" हरिभद्रसूरिः पुनरधस्तने ज्योतिस्तले भरण्यादिकं नक्षत्रमुपरितने च स्वात्यादिकमस्तीत्याह, तथा च तट्टीका—"सत्तहिं नउएहिं उप्पिं हेट्ठिल्लो जोइतलोच्चि, भरणिमाई जोइसपयरो भवतीत्यर्थः, तथा उपरितनः स्वात्युत्तरो ज्योतिषां प्रतर इति" तत्त्वं पुनः केवलिनो विदन्तीति ॥३९॥ सम्प्रति मनुष्यलोके चलं ज्योतिश्चक्रं यावत्या मेरोरबाधया चरति यावत्या च स्थिरं ज्योतिश्चक्रं मनुष्यलोकाद्बहिरलोकाकाशस्याबाधया तिष्ठति, तदेतदाह—

एक्कारस जोअणसय, इगवीसिक्कारसाहिआ कमसो ।
मेरुअलोगाबाहं, जोइसचक्कं चरइ ठाइ ॥ ४० ॥

व्याख्या—एकादश योजनशतानि क्रमश एकविंशत्या एकादशभिश्चाधिकानीति सम्बन्धादयमर्थः—एकादशयोजनशतान्येकविंशत्यधिकानि मेरोरबाधाम्—अन्तरं कृत्वा एतावद्भिर्योजनैर्मेरुं विमुच्येत्यर्थः । किमित्याह—ज्योतिश्चक्रं मनुष्यलोकवर्त्ति 'चरति' भ्रमति । तथैकादशयोजनशतान्येकादशाधिकान्यलोकाकाशस्याबाधां विधायाचलं ज्योतिश्चक्रं तिष्ठति ॥ ४० ॥ ज्योतिश्चक्रमभिधाय तद्गतचन्द्रादिविमानानां संस्थानस्वरूपमियत्तां चाह—

अद्धकविट्ठागारा, फलिहमया रम्मजोइसविमाणा।
वंतरनगरेहिंतो, संखिज्जगुणा इमे हुंति ॥ ४१ ॥

व्याख्या—सर्वेषामपि चन्द्रादिज्योतिष्काणां विमाना 'अर्द्धकपित्थाकाराः' अर्द्धीकृतकपित्थफलसंस्थानाः, विमानश-ब्दः पुंनपुंसकः, आह—यदि सर्वाण्यपि ज्योतिष्कविमानान्यर्द्धकपित्थाकाराणि, ततश्चन्द्रसूर्यविमानान्यतिस्थूलत्वादु-दयास्तसमयतिर्यक्परिभ्रमणकालेषु तथा किं नोपलभ्यन्ते? कामं शिरस उपरि वर्त्तमानानि वर्त्तुलान्युपलभ्यन्तां, अर्द्धकपित्थस्य शिरस उपरि दूरमवस्थापितस्य परभागादर्शनतो वर्तुलतया प्रतिभासनात्, उच्यते, इहार्द्धकपित्थाकारा-णि न सामस्त्येन विमानानि प्रतिपत्तव्यानि, किन्तु विमानानां पीठानि, तेषां चोपरि चन्द्रादीनां प्रासादाः, ते च तथा कथञ्चिद्व्यवस्थिता यथा पीठैः सह प्रायो वर्तुल आकारो भवति, स च दूरभावादेकान्ततः समवृत्ततया जनानां प्रतिभा-तीति न कश्चिद्दोषः, यदाह विशेषणवत्यां साक्षेपं क्षमाश्रमणः "अद्धकविट्ठागारा, उदयत्थमणंमि किह न दीसंति?। ससिसूराण विमाणा, तिरियक्खित्ते ठिआइं च ॥ १ ॥ उत्ताणद्धकविट्ठागारं पीढं तदुवरि पासाओ। वट्टालेखेण तओ, समवट्टं दूरभावाओ ॥ २ ॥ तथा 'स्फटिकमयाः' सामान्येन स्फाटिकाः, लवणे तु तथाजगत्स्वाभाव्यादुदक-स्फाटकस्फटिकमयाः, यत्सूर्यप्रज्ञप्तिनिर्युक्तिः "जोइसिअविमाणाइं, सवाइं हवन्ति फालिहमयाइं। दगफालिआ-

अन्ना पुण, लवणे जे जोइसविमाणा ॥ १ ॥" ततो न तत्र शिखान्तश्चरतां ज्योतिष्कविमानानामुदकेन व्याघातः । शिखाविभागस्त्वेवम्—"पंचाणउइसहस्से, गोतित्थं उभयओवि लवणस्स । जोयणसयाणि सत्त उ, दगपरिवुड्ढी उभयओवि ॥१॥ दसजोयणसाहस्सा, लवणसिहा चक्कवालओ रुंदा । सोलससहस्स उच्चा, सहस्समेगं च ओगाढा ॥२॥ देसूणमद्धजोयण, लवणसिहोवरि दगं दुवे काले । अइरेगं अइरेगं, परिवड्ढइ हायए वावि ॥३॥ अत्रायं भावार्थो—नद्यादिप्रवेशमार्गरूपो नीचतरो भूप्रदेशो गोतीर्थमिव गोतीर्थं, तत्र लवणे उभयतः प्रत्येकं पञ्चनवतिर्योजनसहस्राः, तत्रादौ जम्बूद्वीपधातकीखण्डवेदिकयोः समीपे समभूभागापेक्षया उण्डत्वं तदुपरि जलवृद्धिश्च प्रत्येकमङ्गुलासङ्ख्येयभागः, ततः परं क्रमादध ऊर्ध्वं च तथा कथञ्चित्प्रदेशानां हानिर्वृद्धिश्च यथा पञ्चनवतिसहस्रान्ते समभूतलापेक्षयाऽधोऽवगाहो योजनसहस्रं तदुपरि जलवृद्धिश्च सप्तयोजनशतानि, ततः परं मध्यभागे दशयोजनानां सहस्राणि रथचक्रवद्विस्तीर्णा भूतलसमजलपट्टादूर्ध्वं षोडशसहस्राण्युच्चा सहस्रमेकमधोऽवगाढा लवणशिखा भवति, तस्याश्चोपर्यहोरात्रमध्ये द्वौ वारौ किञ्चिन्न्यूने द्वे गव्यूते जलमधिकमधिकं पातालकलशगतवायोः क्षोभादुपशमाच्च वर्द्धते हीयते चेति । तथा 'रम्याः' रमणीयाश्चक्षुर्मनःप्रह्लादकत्वात् व्यन्तरसत्कनगरेभ्यश्चासंख्यातेभ्योऽपि सकाशात् संख्येयगुणाः, 'इमे' प्रत्यक्षोपलभ्या ज्योतिष्कविमाना भवन्ति ॥ ४१ ॥ सम्प्रति चन्द्रादिविमानानां प्रमाणमाह—

जोअणइगसट्ठिभागा, छपन्नडयाल गाउदुइगद्धं ।
चंदाइविमाणायामवित्थडा अद्धमुच्चत्तं ॥ ४२ ॥

व्याख्या—इह प्रमाणाङ्गुलेन योजनमेकमेकषष्टिभागैर्बुद्ध्या विधीयते, ततश्चन्द्रादिविमानानां यथासंख्यं षट्पञ्चाशद्भागादिप्रमाणावायामविस्तारौ भवतः, इदमुक्तं भवति—समवृत्तत्वाच्चन्द्रविमानानामायामो विस्तारश्च षट्पञ्चाशदेकषष्टिभागा योजनस्य, एवं सूर्यविमानानामष्टचत्वारिंशदेकषष्टिभागाः, ग्रहविमानानां द्वे गव्यूते, क्रोशद्वयमित्यर्थः, नक्षत्रविमानानामेकं गव्यूतं, ताराविमानानामर्द्धं गव्यूतं । सर्वेषां च चन्द्रादिविमानानामुच्चत्वं स्वस्वायामविष्कम्भार्द्धं, तथाहि—चन्द्रमसां विमानान्युच्चैस्त्वेनाष्टाविंशतिरेकषष्टिभागा योजनस्य, सूर्याणां चतुर्विंशतिः, ग्रहाणां गव्यूतं, नक्षत्राणामर्द्धं गव्यूतं, धनुःसहस्रमित्यर्थः, ताराणां क्रोशचतुर्भागः, पञ्चधनुःशतानीत्यर्थः, इदं चेह ताराणां विमानेष्वायामविष्कम्भोच्चत्वमानमुत्कृष्टस्थितीनामवसेयं, जघन्यस्थितीनां त्वायामविष्कम्भमानं पञ्च धनुःशतानि, उच्चत्वं त्वर्द्धतृतीयानि धनुःशतानि, तथाच तत्त्वार्थ भाष्यम्—"सर्वोत्कृष्टायास्ताराया अर्द्धक्रोशः जघन्यायाः पञ्च धनुःशतानि, विष्कम्भार्द्धबाहल्याश्च भवन्ति सर्वे सूर्यादयो नृलोके इति" ॥४२॥ अधुना मनुष्यक्षेत्रस्य प्रमाणमुपदर्शयन् तद्गतानां मनुष्यक्षेत्रबहिर्वर्त्तिनां च चन्द्रादिविमानानां स्वरूपमाह—

पणयाललक्खजोअण, नरखेत्तं तत्थिमे सया अमिरा ।
नरखित्ताउ बहिं पुण, अद्धपमाणा ठिआ निच्चं ॥ ४३ ॥

व्याख्या—जम्बूद्वीपो धातकीखण्डः पुष्करवरद्वीपार्द्धं चेत्यर्द्धतृतीया द्वीपाः, लवणः कालोदश्चेति द्वौ समुद्रौ, एते समुदिता हेममयमानुषोत्तराचलपरिक्षिप्तं नरक्षेत्रं, अत्र मनुष्याणां जन्मनो मरणस्य च सम्भवात्, तत्र पञ्चचत्वारिंशत्संख्येषु भरतादिषु क्षेत्रेषु षट्पञ्चाशत्संख्येषु चान्तरद्वीपेषु मनुष्याणां जन्म मरणं च प्रतीतं, समुद्रवर्षधरपर्वतादिषु तु प्रायो जन्म न घटते, मरणं तु संहरणतो विद्यालब्धितो वा तत्र गतानां सम्भवति, नरक्षेत्रात्तु बहिर्जन्ममरणभाजो मनुष्या न भूता न भवन्ति नापि भविष्यन्ति । यद्यपि कश्चिद्देवो दानवो विद्याधरो वा वैरनिर्यातनार्थं बुद्धिमेवं विधत्ते —यथाऽस्मात् स्थानादुत्पाट्य मनुष्यमेनं नरक्षेत्राद्बहिः प्रक्षिपामि, येनायमूर्ध्वशोषं शुष्यन् म्रियेतेति, तथापि लोकानुभावादेव सा काचिद्बुद्धिर्भूयोऽपि जायते, तथा (तया) संहरत्येव न, संहृत्य वा पुनरानयति, येऽपि जङ्घाचारिणो विद्याचारिणो वा नन्दीश्वरादीनपि यावद्गच्छन्ति, तेऽपि तेभ्यो मनुष्यक्षेत्रमागत्यैव म्रियन्ते, तेनार्द्धतृतीयद्वीपसमुद्रपरिमाणमेव नरक्षेत्रं न शेषमिति। तच्चायामविष्कम्भाभ्यां पञ्चचत्वारिंशल्लक्षा योजनानां ४५०००००, तथाहि—लक्षमेकं समवृत्तो जम्बूद्वीपस्तस्य चैकस्यां दिशि लवणसमुद्रो द्वे, धातकीखण्डश्चत्वारि, कालोदोऽष्टौ, पुष्करवरद्वीपार्द्धमप्यष्टौ,

एवमेकस्यां दिशि द्वाविंशतिर्लक्षाण्येवमेवापरस्यामपि द्वाविंशतिः, सर्वमीलने च पञ्चचत्वारिंशल्लक्षयोजनमानं नरक्षेत्रं। तत्र नरक्षेत्रे वर्त्तमाना इमे चन्द्रादिविमाना मेरोः प्रादक्षिण्येन सर्वकालं भ्रमणशीलाः, नरक्षेत्राद्वहिः पुनश्चन्द्रादिविमाना अर्धप्रमाणाः, इदमुक्तं भवति—नरक्षेत्रान्तर्वर्त्तिचन्द्रादिविमानानां यद्विष्कम्भायामोच्चत्वमानं प्रागभिहितं, तदर्द्धविष्कम्भायामोच्चत्वमानानि नरक्षेत्राद्वहिश्चन्द्रादिविमानानि, तथाहि—चन्द्रमसां विमानान्यायामविष्कम्भाभ्यामुच्चत्वेन च क्रमादष्टाविंशतिश्चतुर्दश चैकषष्टिभागा योजनस्य, एवं सूर्याणां चतुर्विंशतिर्द्वादश च, ग्रहाणां गव्यूतं गव्यूतार्धं च, नक्षत्राणां गव्यूतस्यार्द्धं चतुर्थांशश्च, उत्कृष्टस्थितीनां ताराणां पञ्च अर्द्धतृतीयानि च धनुःशतानि, जघन्यस्थितीनामर्द्धतृतीयानि धनुःशतानि पञ्चविंशत्यधिकं धनुःशतं च। तथैते नरक्षेत्रवहिर्वर्त्तिनश्चन्द्रादिविमाना नित्यस्थिताः—सदावस्थानस्वभावा निश्चला इत्यर्थः ॥४३॥ अधुना मेरोः प्रादक्षिण्येन भ्रमतां चन्द्रादीनां गतितारतम्यं सामान्येन सर्वेषामेव चन्द्रादीनां समृद्धितारतम्यं मनुष्यलोकगतचलच्चन्द्रादिविमानवाहकांश्च गाथाद्वयेनाह—

ससिरविगहनक्खत्ता, तारा हुंति हु जहुत्तरं सिग्घा।
विवरीआ उ महिड्ढीअ, विमाणवहगा कमेणेसिं ॥ ४४ ॥
सोलस सोलस अड चउ दो सुरसहसा पुरो य दाहिणओ।
पच्छिम उत्तर सीहा, हत्थी वसहा हया कमसो ॥ ४५ ॥

व्याख्या—शशी चन्द्रस्तत्प्रभृतयो यथोत्तरं शीघ्रा भवन्ति, यो यस्मादुत्तरः स तस्माच्छीघ्र इत्यर्थः, तुशब्दः प्रस्तु-
तार्थसमर्थने, तथाहि—सर्वमन्दगतयश्चन्द्रास्तेभ्यो रवयः शीघ्राः ततो ग्रहाः तेभ्यो नक्षत्राणि ततोऽपि ताराः
शीघ्रतराः, तुशब्दोऽव्ययत्वेनानेकार्थत्वादनुक्तसमुच्चयेऽपि, तेन बुधात् शुक्रः शुक्रात्मङ्गलो मङ्गलाद् बृहस्पतिर्बृहस्पतेश्च
शनैश्चरः शीघ्र इत्यपि बोद्धव्यं, विपरीताःपुनर्महर्द्धिकास्तथाहि—सर्वाल्पर्द्धयस्तारास्तेभ्यो नक्षत्राणि महर्धिकानि
ततो ग्रहास्तेभ्यः सूर्यास्ततोऽपि चन्द्रा महर्द्धिकाः, एतेषु च तारकाः पञ्चवर्णाः शेषाः पुनरुत्तमकनकवर्णाः, सर्वेऽपि चैते
विशिष्टवस्त्राभरणभूषणा मुकुटमण्डितमौलयः, केवलं चन्द्राणां मुकुटाग्रभागे प्रभामण्डलस्थानीयं चन्द्रमण्डलाकारं
चिह्नं, एवं सूर्यग्रहनक्षत्रताराणामपि स्वस्वमण्डलाकारं चिह्नं वाच्यं, तथाच तत्त्वार्थभाष्यम्—"मुकुटेषु शिरोमुकुटोपगू-
हिभिः प्रभामण्डलकल्पैरुज्ज्वलैश्चन्द्रसूर्यग्रहनक्षत्रतारामण्डलैर्यथास्वं चिह्नैर्विराजमाना द्युतिमन्तो ज्योतिष्का भव-
न्तीति," अत्र 'शिरोमुकुटोपगूहिभिरिति—' मुकुटाग्रभागवर्त्तिभिः। तथा वहन्तीति पचादित्वादचि वहास्त एव स्वार्थे
कप्रत्ययाद्वहकाः, विमानानां वहका विमानवहकाः, वुण्प्रत्यये वा प्राकृतत्वात् ह्रस्वः, ते च 'क्रमाद्' यथासंख्यमेषां—
पञ्चानामपि चन्द्रआदित्यग्रहनक्षत्रताराणां षोडश षोडश अष्टौ चत्वारः द्वौ च सुरसहस्रा भवन्ति, तथाहि—चन्द्रमसां
विमानान्याभियोगिकसुरसहस्राः षोडश वहन्ति, एवं सूर्याणामपि षोडश, ग्रहाणामष्टौ, नक्षत्राणां चत्वारः, तारकाणां
च द्वाविति। इहायं भावार्थः—तथाविधजगत्स्वाभाव्यान्निरालम्बनान्यपि चन्द्रादिविमानानि स्वयमेव वहनशीलानि

सन्ति, केवलमाभियोगिकसुरास्तथाविधाभियोग्यनामकर्म्मोदयात् समानजातीयानां हीनजातीयानां वा अन्येषां निजस्फातिप्रकटनेनात्यन्तप्रमोदाच्च सततवहनशीलान्यपि विमानान्यधःस्थित्वा स्थित्वा सिंहादिरूपधारिणो वहन्ति, नचैतन्नोपपद्यते, यतो यथेह मनुष्यलोके कश्चित्तथाविधाभियोग्यनामकर्म्मोदयाद्दासत्वमनुभवन्नपि सजातीयेतराणां परिचितापरिचितानामन्येषामेवमहमस्य विख्यातनायकस्य सम्मत इति निजसमृद्धिदर्शनार्थं समस्तमपि स्वोचितं कर्म्म प्रमुदितः करोति, एवमेतेऽप्याभियोगिकसुराश्चन्द्रादिविमानानि वहन्तीति । तथा च तत्त्वार्थभाष्यम्—"अमूनि च ज्योतिष्कविमानानि लोकस्थित्या प्रसक्तावस्थितगतीन्यपि ऋद्धिविशेषदर्शनार्थमाभियोग्यनामकर्म्मोदयाच्च नित्यं गतिरतयो देवा वहन्तीति" तथा विमानानामधः क्व स्थिताः किंरूपधारिणश्चैते देवा वहन्तीति दर्शयति—'पुरो येत्यादि' चशब्द उक्तसंख्यापेक्षया वक्तव्यान्तरसमुच्चये, पश्चिम उत्तर इत्यत्र प्राकृतत्वात् प्रत्ययलोपः, 'कमसोत्ति' क्रमेण यथासंख्यं, ततोऽयमर्थः—पुरोऽग्रभागेऽधःस्थिताः सिंहरूपधारिणो देवाश्चन्द्रादिविमानानि वहन्ति, एवं दक्षिणतः कुञ्जररूपधारिणः, पश्चिमतो वृषभरूपा, उत्तरतो हयाः— अश्वास्तद्रूपभृतः, तत्र चन्द्रविमानं सिंहादिरूपधारिणः प्रत्येकं चतुश्चतुःसहस्रसंख्याः सुरा वहन्तीति सर्वेऽपि षोडश सहस्राः, एवं सूर्यविमानमपि, ग्रहविमानं सिंहादिरूपधारिणः प्रत्येकं द्विद्विसहस्रसंख्याः, नक्षत्रविमानमेकैकसहस्रसंख्याः, ताराविमानं पञ्चपञ्चशतसंख्याः सुरा वहन्तीति । न च

तैस्तथा चन्द्रादिविमानानां वहनेऽपि भारो मन्यते, मत्तकामिनीभिरिव विशिष्टाभरणानामिति ॥४४-४५॥ सम्प्रति चन्द्राणां ज्योतिश्चक्राधिपत्वात्परिवारसंख्यामाह—

गहअट्ठासी नक्खत्त, अडवीसं तारकोडिकोडीणं ।
छासट्ठिसहस्स नवसय, पणहत्तरि एगससिसिन्नं ॥ ४६ ॥

व्याख्या—ग्रहाः—मङ्गलादयोऽष्टाशीतिः, नक्षत्राणि—अभिजिदादीन्यष्टाविंशतिः, ताराः—कोटीकोटीनां षट्षष्टिः सहस्रा नवशतानि पञ्चसप्तत्यधिकानि, एतावदेकस्य शशिनः सैन्यं परिवारः ॥ ४६ ॥ नन्वेकस्य शशिन एतावत्तारकपरिवारत्वे मनुष्यक्षेत्रे सर्वसंख्यया द्वात्रिंशदधिकशतसंख्यानां चन्द्रमसां तारागणः परिभाव्यमानोऽतिभूयान् भवेत्, ततः कथं क्षेत्रस्य स्तोकत्वादेतावतस्ताराणां गणस्य मनुष्यलोकेऽवस्थानमित्येतच्चेतस्याशङ्क्याह—

कोडाकोडी सन्नंतरंति मन्नंति खित्तथोवतया ।
केई अन्ने उस्सेहंगुलमाणेण ताराणं ॥ ४७ ॥

व्याख्या—इह द्वे मते, तत्र केचित्कोटीनामेव कोटाकोटीति संज्ञान्तरं—नामान्तरं मन्यन्ते, क्षेत्रस्य स्तोकत्वेन,

तथा पूर्वाचार्यप्रसिद्धेः, तेन षट्षष्टिसहस्राणि नव शतानि पञ्चसप्तत्यधिकानि ताराकोटीनां बोद्धव्यानि, नतु कोटाकोटीनां । अन्ये त्वाहुः—'नगपुढविविमाणाई, मिणसु पमाणंगुलेणं तु' इति वचनात्ताराविमानानां स्वरूपेण ज्ञेय एव सत्सो यदोत्सेधाङ्गुलेन सर्वतो मीयन्ते तदा कोटीकोट्यो जायन्त इति । तथा च विशेषणवत्यां क्षमाश्रमणः —'कोडाकोडी सन्नन्तरन्ति मन्नन्ति केइ ( खित्त ) थोवतया । अन्ने उस्सेहङ्गुलमाणं काऊण ताराण ॥१॥' मिति ॥४७॥

अधुना चन्द्रपरिवारवक्तव्यताप्रस्तावात् तत्परिवारभूतग्रहान्तर्गतस्य राहोर्वक्तव्यतामाह—

किण्हं राहुविमाणं, निच्चं चंदेण होइ अविरहियं ।
चउरंगुलमप्पत्तं, हिट्ठा चंदस्स तं चरइ ॥ ४८ ॥

व्याख्या—इह द्विधा राहुः—नित्यराहुः पर्वराहुश्च । तत्र पर्वराहुः कदाचिदकस्मात्समागत्य निजविमानेन चन्द्रविमानं सूर्यविमानं वा तिरोधत्ते; तिरोहिते च तस्मिन् ग्रहणमिति लोकानां प्रतीतिः । स च पर्वराहुर्जघन्यतः षट्सु मासेष्वतिक्रान्तेषु चन्द्रस्य सूर्यस्य वा उपरागं करोति, उत्कर्षतश्चन्द्रस्य द्विचत्वारिंशति मासेषु, सूर्यस्य त्वष्टाचत्वारिंशति संवत्सरेष्विति । यस्तु नित्यराहुस्तस्य विमानं कृष्णं, तच्च तथाजगत्स्वाभाव्यान्नित्यमाकालं चन्द्रेण सार्द्धं भवत्यविरहितं; तथा चतुरङ्गुलेन—चतुर्भिरङ्गुलैरप्राप्तं सच्चन्द्रस्य—चन्द्रविमानस्याधस्ताच्चरति, तच्च कृष्णपक्षे प्रतिपद आरभ्य प्रति-

दिवसमेकैकां चन्द्रमण्डलस्य कलामात्मीयेन पञ्चदशेन भागेनाऽऽवृणोति, शुक्लपक्षे तु प्रतिपद आरभ्य तथैव मुञ्चति ।
इहायं सम्प्रदायो—द्वाषष्टिभागीकृतस्य चन्द्रविमानस्य द्वौ भागौ सदा अनावार्यौ, शेषस्य पञ्चदशभिर्भागैर्लब्धाश्चत्वारो
भागास्ते उक्तरीत्याऽऽव्रियन्ते मुच्यन्ते चेति । एवं च जगति चन्द्रमण्डलस्य हानिर्वृद्धिश्च प्रतिभासते, यावता स्वरूपे-
णावस्थितमेव तच्चन्द्रमण्डलम् । आह—चन्द्रविमानस्य षट्पञ्चाशदेकषष्टिभागोनयोजनमानत्वात् राहुविमानस्य च ग्रहविमा-
नत्वेनार्द्धयोजनमानत्वात् कथं राहुविमानेन सर्वात्मना चन्द्रविमानावरणस्य सम्भवः ? । उच्यते—ग्रहविमानाना-
मुक्तप्रमाणस्य प्रायिकत्वात् राहुविमानमधिकप्रमाणमपि सम्भाव्यत इत्यदोषः । अन्ये त्वाहुः—लघीयसोऽपि राहुविमा-
नस्यात्यन्तबहलेन प्रसर्पता तामिस्ररश्मिजालेन महदपि चन्द्रविमानमाव्रियत इति ॥ ४८ ॥ साम्प्रतं जम्बूद्वीपे
ताराविमानानां व्याघाते निर्व्याघाते च प्रत्येकमुत्कृष्टं जघन्यं चान्तरालप्रमाणं गाथाद्वयेनाह—

तारस्स य तारस्स य, जंबुद्दीवंमि अंतरं गुरुअं ।
बारस जोअणसहसा, दोन्नि सया चेव बायाला ॥ ४९ ॥
छावट्ठा दो अ सया, जहन्नमेअं तु होइ वाघाए ।
निव्वाघाए गुरुलहु, दो गाउअ धणुसया पंच ॥ ५० ॥

गाथाद्वयमपि सुगमं । नवरं व्याघाते–पर्वतादिस्खलने उत्कृष्टमन्तरं मेरुमपेक्ष्य भावनीयं । तथाहि–मेरुर्दश योजनसहस्राणि, तस्य चोभयतोऽबाधा प्रत्येकमेकविंशत्यधिकान्येकादश योजनशतानि, ततः सर्वमीलनेन भवन्ति योजनानां द्वादशसहस्रा द्वे च शते द्विचत्वारिंशदधिके । जघन्यं तु निषधकूटाद्यपेक्षं, तथाहि–निषधपर्वतः स्वतोऽप्युच्चैश्चत्वारि योजनशतानि, तस्य चोपरि पञ्चयोजनशतोच्चानि कूटानि, तानि चायामविष्कम्भाभ्यां मूले पञ्च योजनशतानि, मध्ये त्रीणि शतानि पञ्चसप्तत्यधिकानि, उपरि चार्द्धतृतीयानि योजनशतानि, तेषां च कूटानामुपरितनभागस्य समश्रेणिप्रदेशे तथा जगत्स्वाभाव्यादष्टावष्टौ योजनान्युभयतोऽबाधया कृत्वा ताराविमानानि परिभ्रमन्तीति भवति जघन्यतो व्याघातिममन्तरं द्वे योजनशते षट्षष्ट्यधिके इति । निर्व्याघातान्तरभावना तु सुगमैव । न चाग्रेतनसंग्रहणीषु जम्बूद्वीपे इति विशेषणस्य व्याघातान्तरस्य चानभिधानात्कथमिदमवसीयत इति वाच्यं । सूर्यप्रज्ञप्तौ जीवाभिगमे च तथाभिधानात्, तथा च तद्ग्रन्थः–"जम्बुद्दीवेणं भंते ! दीवे तारारूवस्स तारारूवस्स य अबाहाए केवइए अंतरे पन्नत्ते ? गोअमा ! दुविहे अंतरे पन्नत्ते, तंजहा–वाघाइमे अ निव्वाघाइमे अ, तत्थ णं जे से वाघाइमे से णं जहन्नेणं दोन्नि छावट्ठे जोअणसए, उक्कोसेणं बारस जोअणसहस्साइं दोन्नि बायाले जोअणसए" इत्यादि ॥ ४९ ॥ ५० ॥ साम्प्रतं मनुष्यक्षेत्रान्तर्वर्त्तिनां चन्द्रार्काणां प्रतिदिनमपरापरमण्डलेषु परिभ्रमणतोऽनवस्थितान्तरत्वात् मनुष्यक्षेत्राद्बहिर्घण्टाकारावस्थितानां तेषामन्तरालप्रमाणमाह–

माणुसनगाउ बाहिं, चंदा सूरस्स सूर चंदस्स ।

जोअणसहस्सा पन्नासणूणगा अंतरं दिट्ठं ॥ ५१ ॥

व्याख्या—मनुष्यक्षेत्रसीमाविधायिनो मानुषोत्तराभिधानपर्वताद्बहिश्चन्द्रात् सूर्यस्य, सूर्याच्च चन्द्रस्य पञ्चाशत् योजनसहस्रा अनूना अन्तरं दृष्टं, तीर्थकृद्गणधरादिभिः । तथा च सूर्यप्रज्ञप्तिः—"चंदाओ सूरस्स य, सूरा चंदस्स अंतरं होइ । पन्नास सहस्साइं, जोअणाणं अणूणाइं ॥ १ ॥" ति ॥ ५१ ॥ इदानीं चन्द्राच्चन्द्रस्य सूर्यात् सूर्यस्य च परस्परमन्तरं गाथार्द्धेनाह—

ससि ससि रवि रवि साहिअ—जोअणलक्खेण अंतरं होइ ।

व्याख्या—इह प्राकृतत्वेन विभक्तिलोपात् शशिनः शशिनो रवे रवेश्च साधिकयोजनलक्षेण परस्परमन्तरं भवति । साधिकत्वं च पूर्वगाथोक्तयोर्द्वयोरन्तरयोर्मीलने तन्मध्ये (व) वर्तिनो भानोश्चन्द्रस्य वा लक्षणविधानो विष्कम्भस्य च प्रक्षेपे सम्पद्यते ॥ मनुष्यलोकाद्बहिश्चन्द्रार्काणां पङ्क्त्यवस्थानं गाथापश्चिमार्द्धेनाह—

रविअंतरिआ ससिणो, ससिअंतरिआ रवी दित्ता ॥ ५२ ॥

सुगमं । नवरं 'दित्त'त्ति दीप्ताः—भास्वराः, पङ्क्तिस्वरूपं चाग्रे भावयिष्यते ॥ ५२ ॥ अधुना द्वीपसमुद्रेषु चन्द्रादिसंख्यामभिधित्सुस्तावत्तेषामेवेयत्तामाह—

उद्धारसागरदुगे, सड्ढे समएहिँ तुल्ल दीवुदही ।
दुगुणादुगुणपवित्थर, वलयागारा पढमवज्जं ॥ ५३ ॥

व्याख्या—उद्धारसागरोपमयोः—प्रागुक्तस्वरूपयोर्द्विके सार्द्धे यावन्तः समयास्तैस्तुल्याः—तावत्संख्या द्वीपोदधयो भवन्ति । कथंभूता ? द्विगुणद्विगुणप्रविस्ताराः—पूर्वस्मात् पूर्वस्माद् द्विगुणो द्विगुणश्च क्रमेण वर्द्धनात् प्रकृष्टो विस्तारो विष्कम्भो येषां ते तथा । तथाहि—जम्बूद्वीपो विस्तारतः प्रमाणाङ्गुलेन योजनानां लक्षं, लवणसमुद्रो द्वे, धातकीखण्डश्चत्वारि, कालोदोऽष्टौ, पुष्करवरः षोडश, पुष्करवरोदो द्वात्रिंशदेवं यावदसंख्ययोजनकोटीकोटीप्रमाणात् स्वयम्भूरमणद्वीपात् स्वयम्भूरमणः समुद्रो द्विगुणविष्कम्भ इति । प्रथमं च जम्बूद्वीपं वर्ज्जयित्वा शेषा लवणादयो जलधिद्वीपा वलयाकाराः ॥ ५३ ॥ द्वीपोदधीनामेव स्वरूपमाह—

पढमो जोअणलक्खं, वट्टो तं वेढिउं ठिआ सेसा ।
पढमो जंबूदीवो, सयंभुरमणोदही चरमो ॥ ५४ ॥

सुगमा । नवरं 'वट्टो'त्ति तैलापूपसंस्थानः ॥ ५४ ॥ कियतामपि द्वीपानां साक्षान्नामान्याह—

जंबु धायइ पुक्खर, वारुणि खीर घय खोअ नंदिसरा ।
अरुणरुणुवाय कुंडल, संख रुअग भुअग कुस कुंचा ॥ ५५ ॥

व्याख्या—प्रथमो द्वीपो जम्बूद्वीपो, द्वितीयो धातकीखण्डस्तृतीयः पुष्करवरश्चतुर्थो वारुणीवरः, पञ्चमः क्षीरवरः, षष्ठो घृतवरः, सप्तम इक्षुवरोऽष्टमो नन्दीश्वरो, नवमोऽरुणः, ततोऽरुणुवायत्ति—प्राकृतत्वादरुणोपपातः, अरुणशब्दस्य उप—सामीप्येन प्रकपातः—पतनं नाम्नि यस्येति कृत्वा यथा दशमोऽरुणवरः, एकादशोऽरुणवरावभासः, एतानि च जम्बूद्वीपादारभ्य क्रमेण द्वीपानां नामानि । अत ऊर्ध्वं तु शङ्खादिनामानि यथा कथञ्चित्, परं तान्यपि त्रिप्रत्यवताराणि, यथा—शङ्खः, शङ्खवरः, शङ्खवरावभासः, रुचको, रुचकवरो, रुचकवरावभासः । एवं कुण्डलादिष्वपि त्रिप्रत्यवतारता वाच्या, सूचकत्वात् सूत्रस्य । ततो द्वादशः कुण्डलस्त्रयोदशः कुण्डलवरश्चतुर्दशः कुण्डलवरावभासः, भुजगो, भुजगवरो, भुज (ग) वरावभासः (कुशः) कुशवरः, कुशवरावभासः, क्रौञ्चः, (क्रौञ्चवरः) क्रौञ्चवरावभास इति ॥ ५५ ॥ एते च सर्वेऽपि प्रत्येकमेकैकेन समुद्रेण वेष्टिताः, अतः साक्षादतिदेशाच्च तन्नामान्याह—

पढमे लवणो जलही, बीए कालोउ पुक्खराईसु ।

दीवेसु हुंति जलही, दीवसमाणेहिं नामेहिं ॥ ५६ ॥

सुगमा । केवलं केषाञ्चिदुक्तद्वीपोदधीनामन्वर्थो दर्श्यते—तत्र जम्बूद्वीपे तत्र तत्र देशे बहवो जम्बूवृक्षा जम्बूवनानि जम्बूखण्डा नित्यकुसुमिता यावत्सश्रीकाः सन्ति । अत्रैकजातीयवृक्षौघो वनं, नानाजातीयवृक्षौघः खण्डः, परं प्रधानेन व्यपदेशात् जम्बूखण्ड इति जम्ब्वा व्यपदेशः । तथा पार्थिवो रत्नहेमरजतमयोऽनादृताभिधानस्य द्वीपाधिपदेवस्यावासभूत उत्तरकुरुवर्त्ती जम्बूवृक्षोऽस्तीति जम्बूपलक्षितो द्वीपो जम्बूद्वीपः । शाश्वतं चेदं नाम, नतु कालत्रयेऽप्यन्यथाभावः १ ॥ एवमग्रेतनान्यपि नामानि शाश्वतानि बोद्धव्यानि । लवणं—क्षारमुपलक्षणात्तीक्ष्णं कटुकं वृद्धिहानिभ्यां पङ्कबहुलं, तद्योनिकान् विमुच्य शेषसत्त्वानामपेयं च जलमस्येति लवणसमुद्रः । सुस्थितोऽत्राधिपः २ ॥ धातकीखण्डे तत्र तत्र बहवो धातकीनां वृक्षाणां वनानि खण्डा नित्यपुष्पितत्वादिगुणाः सन्ति । तथा च पूर्वापरार्द्धयोः सुदर्शनप्रियदर्शनदेवावासौ धातकीमहाधातकीवृक्षौ स्तः । ततो धातकीखण्डोपलक्षितो द्वीपो धातकीखण्डः ३ ॥ कालं—माषराशिवर्णाभं, पूर्वापरार्द्धाधिष्ठात्रोः कालमहाकालदेवयोर्वा सम्बन्धि च उदकं यत्रेति कालोदो । 'नाम्युत्तरपदस्य चे(३—२—१७)त्युदादेशः ४ ॥ पुष्करवरे तत्र तत्र पद्मान्यतिविशालतया वृक्षा इव पद्मवृक्षाः, पद्मवनानि, पद्मखण्डाः, तथा पूर्वापरार्द्धयोः पद्मपुण्डरीकदेवावासौ पद्ममहापद्मवृक्षौ, पद्मं च पुष्करमिति

पुष्करवरोपलक्षितो द्वीपः पुष्करवरः ५ ॥ पुष्करवरोदे जलं स्वच्छं पथ्यं जात्यं तनुस्फटिकाभमुदकरसं, श्रीधरश्रीप्रभदेवाभ्यां च (स) परिवाराभ्यां गगनमिव चन्द्रार्काभ्यां सनक्षत्रताराभ्यां तदुदकं भातीति, पुष्करमिव वरमुदकं यस्यासौ पुष्करवरोदः ६॥ वरवारुणीव वाप्यादिषूदकं यस्येति वारुणीवरः, वरुणवर इत्यप्यागमे दृश्यते, ततः पृषोदरादित्वादिष्टरूपसिद्धिः। तथा वरुणवर(रु)णप्रभौ चात्र देवौ, ततो वरुणदेवप्रधानो द्वीपो वरुणवरः ७॥ वरवारुणीव, वारुणवारुणकान्तयोर्वा देवयोः सम्बन्धि उदकं यस्यासौ वारुणीवरोदः। आगमे तु वारुणवरोदो वरुणोदश्चेति ८ ॥ क्षीरोपमं वाप्यादिषूदकं, क्षीरप्रभौ पुण्डरीकपुष्पदन्तौ देवौ चात्रेति क्षीरवरो द्वीपः ९ ॥ क्षीरमिव, यद्वा क्षीरोज्ज्वलयोर्विमलविमलप्रभदेवयोः सम्बन्धि उदकं यस्येति क्षीरोदः १० ॥ घृतोदकवाप्यादियोगात् घृतवर्णकनककनकप्रभदेवस्वामिकत्वाच्च घृतवरो द्वीपः ११ ॥ घृतमिवोदकं यस्यासौ घृतोदः। कान्तसुकान्तौ चात्र देवौ १२ ॥ क्षोदः—क्षोदरस इक्षुरस इत्यर्थः, तद्रूपोदकवाप्यादियोगात् क्षोदवरो द्वीपः। सुप्रभमहाप्रभौ चात्र देवौ १३ ॥ क्षोद इवोदकं यस्येति क्षोदोदः, पूर्णपूर्णप्रभौ चात्र देवौ १४ ॥ नन्दीश्वरे द्वीपे क्षोदोदकपूर्णेषु वाप्यादिजलस्थानेषु सर्ववज्रमयेषूत्पातपर्वतेषु 'वाणमन्तरा देवा देवीओ अ आसयन्ति सयन्ति जाव विहरन्ति' कैलासहरिवाहनौ च द्वौ महर्द्धिकावधिपती। तथा चतसृष्वपि दिक्षु मध्यभागे एकैकोऽञ्जनरत्नमयोऽञ्जनकपर्वतः, तच्चतुर्दिशं चतस्रो वाप्यः, तासु च मध्यभागे एकैकः स्फटिकमयो दधिमुखपर्वतः, षोडशानामपि च वापीनामपान्तराले द्वौ

द्वौ रतिकरपर्वतौ, तेषु च पर्वतेषु प्रत्येकमेकैकचैत्यभावाद् द्विपञ्चाशत् सिद्धायतनानि, तेषु च बहवश्चतुर्विधसुराश्चातुर्मासिकसांवत्सरिकजिनजन्मव्रतज्ञानमोक्षादिषु पर्वस्वष्टाह्निकामहिमाः कुर्वन्तः सुखेनासते । तत एवं नन्द्याः समृद्ध्या ईश्वरः—स्फातिमान् न तु नाम्नैवेति नन्दीश्वरः १५॥ सुमनःसुमनोभद्रयोः स्फीतत्वेन नन्दीश्वरयोः सम्बन्धि उदकं यत्र नन्दीश्वरद्वीपं परिवेष्ट्य स्थितत्वान्नन्दीश्वरे लग्नमुदकं यस्येति वा स नन्दीश्वरोदः १६ ॥ अशोकवीतशोकदेवयोः प्रभया सर्ववज्ररत्नमयपर्वतादिप्रभया वाऽरुणत्वादरुणो द्वीपः १७ ॥ अरुणद्वीपपरिक्षेपि यदि वा सुभद्रसुमनोभद्रदेवाभरणप्रभया अरुणम्—आरक्तमुदकं यस्येत्यरुणोदः १८ ॥ सर्वेऽपि च प्रागुक्ता जम्बूद्वीपाधिपादयः पल्योपमस्थितयः । एवमन्येष्वपि द्वीपोदधिषु यथागमसम्प्रदायमन्वर्थो भावनीय इति ॥ ५६ ॥ तदेवं नामतः कतिपयान् द्वीपोदधीनभिधाय शेषानतिदिशन्नपरमपि तद्विशेषं गाथाचतुष्टयेनाह—

आभरणवत्थगंधे, उप्पलतिलए अ पउमनिहिरयणे ।
वासहरदहनईओ, विजया वक्खार कप्पिंदा ॥ ५७ ॥
कुरुमंदरआवासा, कूडा नक्खत्तचंदसूरा य ।
अन्नेवि एवमाई, पसत्थ वत्थूण जे नामा ॥ ५८ ॥

तन्नामा दीवुदही, तिपडोआयार हुंति अरुणाई ।
जंबूलवणाईआ, पत्तेअं ते असंखेज्जा ॥ ५९ ॥
ताणंतिमसुरवरावभासजलही परं तु एक्केके ।
देवे नागे जक्खे, भूए अ सयंभुरमणे अ ॥ ६० ॥

व्याख्या–'आभरणवत्थगन्धे' इत्यादौ 'प्राकृते विभक्तिव्यत्ययोऽपी'ति षष्ठ्यर्थे प्रथमा, तत आभरणानां हारार्द्ध-हाररत्नावलीप्रभृतीनां यानि कानिचित् नामानि, तथा वस्त्राणां कौशेयादीनां, गन्धानां कोष्ठपुटादीनां, उत्पलादीनां (उत्पलानां) नीलोत्पलकुमुदादीनां, तिलकानां वृत्ततिलककलस(श)तिलकादीनां तिलकस्य वा वृक्षविशेषस्य उपलक्षणात् शेषवृक्षाणां च, पद्मानां शतपत्रपुण्डरीकादीनां, निधीनां नवानां, रत्नानां वज्रेन्द्रनीलादीनां चक्रवर्तिसम्बन्धिनां चक्रादीनां च, वर्षधराणां हिमवदादीनां, द्रहाणां पद्महदादीनां, नदीनां गङ्गादीनां, विजयानां कच्छादीनां, वक्षस्काराणां चित्रादीनां, कल्पानां सौधर्मादीनां, इन्द्राणां शक्रादीनां, कुरूणां देवकुरूत्तरकुरूणां, मन्दराणां मेरूणां, आवासानां तिर्यग्लोके शक्रादिसम्बन्धिनां, कूटानां हिमवदादिसम्बन्धिनां, नक्षत्राणां कृत्तिकादीनां, चन्द्राणां सूर्याणां च यानि नामानि, एवमन्यान्यप्येवमादीनि प्रशस्तानि शुभानि वस्तूनां पदार्थानां यानि नामानि तन्नामानो

द्वीपा उदधयश्च भवन्ति, सर्वेऽपि चैते अरुणमादिं कृत्वा त्रिप्रत्यवताराः, तत्रारुणादीनां क्रौञ्चान्तानां त्रिप्रत्यवतारता प्रागेव भाविता, आभरणादीनां तु भाव्यते—तद्यथा—हारो द्वीपो हारः समुद्रो, हारवरो द्वीपो हारवरः समुद्रो, हारवरावभासो द्वीपो हारवरावभासः समुद्रः, एवं तावत् त्रिप्रत्यवतारनामानो द्वीपाः समुद्राश्च वक्तव्या यावद्देवद्वीपादर्वाक् सूर्यवरावभासः समुद्रः, तथाच जीवाभिगमः—'एवं सव्वे तिपडोआरा जाव सूरवरावभासे दीवे समुद्दे' इति । तथा चूर्णिश्चास्य 'अरुणाई दीवसमुद्दा तिपडोआरा यावत् सूर्यवरावभास' इति । तथा जम्बूद्वीपलवणादयस्ते द्वीपोदधयः प्रत्येकमसङ्ख्येया, इदमुक्तं भवति—देवादिद्वीपसमुद्राणां नामानि वर्जयित्वा शेषैर्जम्बूद्वीपादिनामभिर्लवणादिनामभिश्च द्वीपाः समुद्राश्च प्रत्येकमसंख्याता भवन्ति, तेषां च सर्वेषामप्यसंख्यातानां द्वीपसमुद्राणामन्तिमः-पर्यन्तवर्ती यः सूर्यवरावभासः समुद्रस्तस्मात्परं पुनः सर्वतिर्यग्लोकपर्यन्तवर्तिनो देवादयः पञ्च द्वीपाः पञ्च समुद्राश्च प्रत्येकमेकैके न त्रिप्रत्यवतारा नापि प्रत्येकमसंख्याताः, देवादिनाम्ना द्वीपः समुद्रश्चान्यो नास्तीत्यर्थः, तथाच जीवाभिगमः, 'देवे नागे जक्खे भूए अ सयंभुरमणे अ एकेक्के चेव भाणिअवे, तिपडोआरया नत्थि'त्ति । तथा—केवइआणं भंते ! जंबुद्दीवा दीवा पन्नत्ता ? गोअमा ! असङ्खेज्जा जम्बुद्दीवा दीवा पन्नत्ता, एवं जाव सूरवरावभासा समुद्दा असङ्खेज्जा । केवइआणं भन्ते ! देवदीवा ? गोयमा ! एगे देवदीवे पन्नत्ते, दसवि एगागारा' इति । तथा सर्वेऽपि चैते जम्बूद्वीपलवणादयो द्वीपसमुद्राः प्रत्येकमेकया प्राकारकल्पया विजयवैजयन्तजयन्तापराजिताख्यचतुर्द्वारया सर्वरत्न-

मय्या जगत्या परिक्षिप्ताः, सा चोर्ध्वमष्टौ विष्कम्भतो मूले द्वादश मध्येऽष्टौ शिरसि चत्वारि योजनानि, तस्याश्चोपरि बहुमध्यभागेऽर्द्धयोजनोच्चा पञ्चधनुःशतविस्तारा सर्वरत्नमयी पद्मवरवेदिका, तस्या बहिरन्तश्च देशोनयोजनद्वयविष्कम्भं वनखण्डमिति ॥ ५७ ॥ ५८ ॥ ५९ ॥ ६० ॥ सम्प्रति समुद्रेषु जलस्य मत्स्यानां च स्वरूपं गाथाद्वयेनाह—

वारुणिवर खीरवरो, घयवरलवणो अ हुंति भिन्नरसा ।
कालोअ पुक्खरोअहि, सयंभुरमणो अ उदगरसा ॥ ६१ ॥

इक्खुरस सेसजलही, लवणे कालोएँ चरिमि बहुमच्छा ।
पणसगदसजोअणसय—तणू कमा थोव सेसेसु ॥ ६२ ॥

व्याख्या—वारुणीवरः क्षीरवरो घृतवरो लवणोदश्चेत्येते चत्वारोऽप्युदधयो भिन्नरसाः—पृथग्रसास्तथाहि—वारुणीवरः सुजातपरमद्रव्यसम्मिश्रमदिरातोऽप्यत्यन्तरम्यास्वादजलः, क्षीरवरश्चतुर्विभागखण्डादिसम्मिश्रत्रिभागावर्त्तिताज(ज्य)स्वादनीयदीपनीयबृंहणीयसर्वेन्द्रियगात्राह्लादनीयगोक्षीरादप्यत्यन्तमनोज्ञास्वादनीरः, घृतवरः सुक्वथितसद्योविस्यन्दितगोघृतादपि सुस्वादतोयः, लवणोदो लवणमयजलः, तथा कालोदः पुष्करोदधिः स्वयम्भूरमणश्चेत्येते त्रयोऽपि

समुद्रा उदकरसाः, उदकस्येव मेघमुक्तस्य रस आस्वादो येषां ते तथा। शेषजलधयो—नन्दीश्वरसमुद्रादयो भूतसमुद्रान्ताः सर्वेऽपीक्षुरसाः, इक्षुरसस्येव रस आस्वादो येषां ते तथा, उष्ट्रमुखादय(३-१-२३)इति समासः,“त्वगेलाकेसरैस्तुल्यं, त्रिसुगन्धि त्रिजातकम्। मरिचैश्च समायुक्तं,चतुर्जातकमुच्यते॥१॥” इत्येवंरूपचतुर्जातकसम्मिश्रत्रिभागावर्तितेक्षुरसादप्यत्यन्तमधुरतोया इत्यर्थः। तथा लवणे कालोदे चरमे च स्वयम्भूरमणे बहवो—भूयांसो मत्स्या—मत्स्यमकरकच्छपादिका मत्स्यजातयः,कथम्भूताः? पञ्चसप्तदशयोजनशततनवः, क्रमाद्—यथासंख्यं,ततोऽयमर्थो—लवणोदधौ मत्स्यानामुत्कर्षतः शरीरप्रमाणं पञ्च योजनशतानि, कालोदे सप्त योजनशतानि, स्वयम्भूरमणे योजनसहस्रं, योजनं चात्रोत्सेधाङ्गुलेन, शरीरमाने तस्यैवाधिकृतत्वात्। शेषेषु पुनः समुद्रेषु स्तोकाः—स्वल्पा एव मत्स्यादयो भवन्तीति। अपरश्चात्र विशेषो—लवणे मत्स्यानां योनिप्रभवाः जातिप्रधानाः सप्त कुलकोटिलक्षाः, कालोदे नव, स्वयम्भूरमणेऽर्द्धत्रयोदश, तथा च जीवाभिगमः—“लवणे णं भन्ते! समुद्दे कइ मच्छजाइकुलकोडिजोणीपमुहसयसहस्सा पन्नत्ता? गोअमा! लवणे सत्त, कालोए नव, सयम्भुरमणे अद्धत्तेरस”त्ति ॥६२॥ तदेवं सप्रपञ्चं द्वीपोदधीनभिधाय प्रतिद्वीपं प्रतिसमुद्रं च चन्द्रादिसंख्याभिधानार्थमाह—

दो ससि दो रवि पढमे, दुगुणा लवणंमि धायईसंडे।

जारस ससि जारस रवि, तप्पभिइ निदिट्ठ ससिरविणो ॥ ६३ ॥
तिगुणा पुव्विल्लजुआ, अणंतराणंतरम्मि खेत्तम्मि ।

व्याख्या—प्रथमे—जम्बूद्वीपे द्वौ चन्द्रौ द्वौ सूर्यौ, लवणे तौ द्विगुणौ, चत्वारश्चन्द्राः चत्वारः सूर्या इत्यर्थः, धातकीखण्डे द्वादश चन्द्राः द्वादश सूर्याः, अत ऊर्ध्वं कालोदादिषु चन्द्रादित्यसंख्यानयनाय करणमाह—तप्पभिइ इत्यादि, स धातकीखण्डः प्रभृतिरादिर्येषां ते तेषु धातकीखण्डप्रभृतिषु द्वीपसमुद्रेषु, ये निर्दिष्टा द्वादशादयश्चन्द्राः सूर्या वा, ते त्रिगुणाः—त्रिगुणीकृताः, 'पुव्विल्लजुअ'त्ति निर्दिष्टचन्द्रयुक्ताद् द्वीपात् समुद्राद्वा प्राक् जम्बूद्वीपमादिं कृत्वा ये चन्द्राः सूर्या वा ते आकलनात्तैर्युताः—सहिताः सन्तो यावन्तो भवन्ति तावत्संख्यास्तेऽनन्तरेऽनन्तरे क्षेत्रे—कालोदादौ भवन्ति। तत्र धातकीखण्डे निर्दिष्टाश्चन्द्रा द्वादश त्रिगुणाः षट्त्रिंशत्, ततो जम्बूद्वीपलवणसम्बन्धिभिः षड्भिश्चन्द्रैः सहिता जाता द्विचत्वारिंशत्, एतावन्तः कालोदे चन्द्राः, एवं सूर्या अप्यत्रैतावन्त एव । तथा कालोदे द्विचत्वारिंशच्चन्द्रास्ते त्रिगुणाः जातं षड्विंशं शतं, ततो जम्बूद्वीपलवणधातकीखण्डसत्कैरष्टादशभिश्चन्द्रैः सहिता जातं चतुश्चत्वारिंशं शतं, एतावन्तः पुष्करवरद्वीपे चन्द्राः एतावन्त एव च सूर्याः । एवं शेषेष्वपि द्वीपसमुद्रेष्विदमेव करणं भावनीयं । तथा च मूलसंग्रहणीटीकायां हरिभद्रसूरिः—"एवं अणन्तराणंतरे खेत्ते पुक्खरवरदीवे चोआलं

चन्दसयं हवइ" । एवं शेषेष्वपि द्वीपसमुद्रेष्वमुनोपायेन चन्द्रादिसंख्या विज्ञेयेति । युक्ता चेयं व्याख्या, चन्द्रप्रज्ञप्तौ सूर्यप्रज्ञप्तौ जीवाभिगमे च सकलं पुष्करवरद्वीपमाश्रित्यैतत्यसेव चन्द्रादिसंख्याभिधानात्, तथा च तद्ग्रन्थः—"पुक्खरवरदीवे णं भन्ते! दीवे केवइआ चंदा पभासिंसु पभासंति पभासिस्संति वा? गोअमा! चोआलं चंदसयं पभासिंसु पभासंति पभासिस्संति वा, चोआलं सूरिआण सयं तविंसु तवंति तविस्संति वा" इत्यादि। तथाऽस्मिन्नेवार्थे सूर्यप्रज्ञप्तौ संग्रहणीगाथाः—"चोआलं चंदसयं, चोआलं चेव सूरिआण सयं। पुक्खरवरम्मि दीवे, चरंति एए पगासिंता ॥ १ ॥ चत्तारि सहस्साइं, बत्तीसं चेव होंति नक्खत्ता । छच्च सया बावत्तरि, महागहा बारस सहस्सा ॥२॥ छन्नउइ सयसहस्सा, चोआलीसं भवे सहस्साइं। चत्तारिं च सयाइं, तारागणकोडिकोडीणं ॥३॥" ज्योतिष्करण्डकसूत्रकृतोऽप्ययमेवाभिप्रायः, तथाच तद्ग्रन्थः—"धायइसण्डप्पभिई, उद्दिट्ठा तिगुणिआ भवे चंदा। आइल्लचंदसहिआ, ते होंति अणंतरं परओ ॥ १ ॥ आइच्चाणंपि भवे, एमेव विही अणेण कायव्वो। दीवेसु समुद्देसु अ, एमेव परं परं जाण ॥२॥" किञ्च—मूलसंग्रहण्यां क्षेत्रसमासे च सकलश्रुतजलधिना क्षमाश्रमणजिनभद्रगणिना सर्वद्वीपोदधिगतचन्द्रार्काभिधायकमिदमेव करणमभिहितं, यदि पुनर्मनुष्यक्षेत्राद्बहिश्चन्द्रादित्यसंख्याऽन्यथा स्यात्, तत (तत् प्राक्) आचार्यान्तरैरिव तत्प्रतिपत्तये करणान्तरमप्यभिहितं स्यात्, न चाभिहितं, ततो निश्चीयते सर्वद्वीपोदधिष्विदमेव करणमनुसर्त्तव्यमिति- । केवलं मनुष्यक्षेत्राद्बहिश्चन्द्रार्काः कथं व्यवस्थिता इति चन्द्रप्रज्ञप्त्यादौ

गा- ॥

नाकस्य, एतावत्तूक्त—"चंदाओ सूरस्स य, सूरा चंदस्स अंतरं होइ। पन्नास सहस्साइं, जोअणाणं अणूणाइं ॥१॥ सूरस्स य
सूरस्स य, ससिणो ससिणो य अंतरं होइ। बहिआ य माणुसनगस्स जोअणाणं सयसहस्सं ॥२॥ सूरंतरिआ चंदा,
चंदंतरिआ य दिणयरा दित्ता। चित्तंतरलेसागा, सुहलेसा मंदलेसा य ॥३॥ यत्र "चित्तंतरलेसागत्ति" चन्द्राणां सूर्यैः
सूर्याणां च चन्द्रैरन्तरितत्वात् चित्रमन्तरं य(त)था चन्द्रसूर्ययोः क्रमेण शीतोष्णरश्मित्वाच्चित्रा च लेश्या—प्रकाश
रूपा येषां ते तथा, लेश्यामेवाह—सुहलेसा मंदलेसा यत्ति, चन्द्राः सुखलेश्याः, न मनुष्यलोके शीतकाल इवैका-
न्तशीतरश्मयः, सूर्यास्तु मन्दलेश्याः, न मनुष्यक्षेत्रे निदाघसमय इवात्यन्तमुष्णरश्मयः। तथा च तत्त्वार्थटीकायां हरि-
भद्रसूरिः—"नात्यन्तशीताश्चन्द्रमसो नात्यन्तोष्णाः सूर्याः, (सूर्यस्य) किन्तु साधारणा द्वयोरपि लेश्या" इति। ततश्चन्द्र-
प्रज्ञप्त्याद्यनुसारतः सम्भाव्यते—सूचीश्रेण्या व्यवस्थिता न परिरयश्रेण्येति। अन्यथा वा बहुश्रुतैर्यथागमं परिभावनी-
यमिति॥ आगतफलस्यैव दिग्मात्रमाह—

---

१ एकैकस्यां च सूचीश्रेण्यां परस्परं अन्तरिताः कथितान्तरालाश्चन्द्राः सूर्याश्चाष्टलक्षमाने पुष्करार्द्धे पृथगष्टावेव सम्भवन्ति। तथाच सति ५
द्विसप्ततेः सूर्याणां चन्द्राणां चावस्थानं न नवभिः श्रेणिभिः सङ्गच्छते इति नव (च) सूचीश्रेण्यो मनुष्यक्षेत्राद्बहिः पुष्करार्द्धे सम्भाव्यन्ते।
ननु एवं सूचीश्रेण्योऽग्रेतनेषु समुद्रादिषु कथं घटन्ते? यतः पुष्करवरसमुद्रे ४९२ चन्द्राः सूर्याश्च सन्ति, द्वात्रिंशल्लक्षप्रमाणे च तस्मिन्नेकस्यां
श्रेण्यां द्वात्रिंशदेव चन्द्राः सूर्याश्च सम्भवन्ति, तथाच सति पञ्चदशभिः श्रेणिभिः ४८० भवन्ति, उपरितनाश्च द्वादश कथं क्रियन्ते? ६
इत्यरुचौ प्राह—अन्यथा वेति।

कालोए बायाला, बिसत्तरी पुक्खरद्धम्मि ॥ ६४ ॥

व्याख्या—भावितार्थं, नवरं मनुष्यक्षेत्रानुगुण्यतः पुष्करवरद्वीपार्द्धगतचन्द्रार्कसंख्योक्तेति । अत्र च मनुष्यक्षेत्राद्बहिश्चन्द्रार्कपङ्क्तिविषये बहूनि पक्षान्तराणि सन्ति, विनेयानुग्रहार्थं तु किञ्चित् प्रदर्श्यते, तत्रैके प्राहुः—मनुष्यक्षेत्रसीमाविधायिनो मानुषोत्तरनगात्परतो लक्षार्द्धातिक्रमे वृत्तक्षेत्रविष्कम्भः षट्चत्वारिंशद्योजनलक्षाः ४६०००००, तस्य च परिधिरेका योजनानां कोटी पञ्चचत्वारिंशल्लक्षाः षट्चत्वारिंशत् सहस्राश्चत्वारि शतानि सप्तसप्तत्यधिकानि १४५४६४७७, एकैकस्मिंश्च लक्षे एकैकस्य चन्द्रस्य एकैकस्य च सूर्यस्य भावादुद्धरितस्य च विभज्य सर्वान्तरालेषु प्रक्षेपात् प्रथमपङ्क्तौ साधिकयोजनलक्षार्द्धान्तरालानामेकान्तरस्थितचन्द्रार्काणां प्रत्येकं पञ्चचत्वारिंशं शतं भवति, ततः परं सर्वा अपि पङ्क्तयो योजनलक्षान्तरालाः । एवं च यो द्वीपः समुद्रो वा यावल्लक्षप्रमाणस्तत्र तावत्यः पङ्क्तयो भवन्ति । ततश्च प्रथमपङ्क्तेरनन्तरं द्वितीयस्यां पङ्क्तौ प्रत्येकं षण्णां चन्द्रार्काणां वृद्धिः, तृतीयस्यां सप्तानां, तत ऊर्ध्वं द्वे द्वे पङ्क्ती, षट्कवृद्ध्या तृतीया सप्तकवृद्ध्येति । तथाहि—पङ्क्त्योरन्तरालमेकपार्श्वे योजनानां लक्षं अपरपार्श्वेऽपि लक्षमिति । लक्षद्वयाधिके विष्कम्भे प्रतिपङ्क्ति परिधौ षट् लक्षा द्वात्रिंशत् सहस्राश्चत्वारि शतानि पञ्चपञ्चाशदधिकानि ६३२४५५ वर्द्धन्ते, एतेषां च पूर्वपरिधौ १४५४६४७७ प्रक्षेपे जातमेका योजनानां कोटी एकपञ्चाशल्लक्षा अष्टसप्ततिः सहस्रा

नव शतानि द्वात्रिंशदधिकानि १५१७८९३२, एवं च द्वितीयपङ्क्तौ सप्तमलक्षस्यासम्पूर्णत्वात् षण्णामेव लक्षाणां पूर्वपरिधेः सकाशाद्वृद्धौ प्रतिलक्षमेकैकचन्द्रार्कसद्भावात् प्रथमपङ्क्तिसम्बन्धिनः पञ्चचत्वारिंशस्य शतस्य षड्भिराधिक्ये जातं चन्द्रार्काणां प्रत्येकमेकपञ्चाशं शतं, ततो द्वितीयपङ्क्तिपरिधौ पूर्ववल्लक्षद्वयपरिधिप्रक्षेपे जातमेका कोटी अष्टपञ्चाशल्लक्षा एकादश सहस्राणि त्रीणि शतानि सप्ताशीत्यधिकानि १५८११३८७, तथा च सति तृतीयपङ्क्तौ सप्तभिराधिक्येऽष्टपञ्चाशं शतं,तदनन्तरं तु द्वयोः पङ्क्त्योः पङ्क्तिरेकस्यां सप्तभिः,पुनर्द्वयोः पङ्क्तिरेकस्यां सप्तभिस्तावदाधिक्यं वाच्यं, यावल्लोकान्त इति। पुष्करवरद्वीपोत्तरार्द्धे चाष्टस्वपि पङ्क्तिषु सर्वसंख्यया त्रयोदशशतानि सप्तत्रिंशदधिकानि १३३७प्रत्येकं चन्द्राः सूर्याश्च भवन्ति। एतदर्थसंग्राहिकाश्च पूज्यकृता एव गाथा इमाः—माणुसनगाउ परओ, लक्खद्धे होइ खेत्तविक्खंभो। छायालीसं लक्खा, परिही तस्सेगकोडीओ ॥ १ ॥ पणयालीसं लक्खा, छायालीसं च जोअणसहस्सा। चउरो सयाइं तह सत्तहत्तरी जोअणाणं तु ॥२॥ साहिअजोअणलक्खद्धेगंतरठिअससीण सूराणं। पंतीए पढमाए, पणयालसयं तु पत्तेअं ॥ ३ ॥ तप्परओ पंतीओ, जोअणलक्खंतराउ सव्वाओ। जो जइलक्खो दीवुदहि तत्थ तावइअ पंतीओ॥४॥ वुड्ढि दुइअपंतीए, छण्हं तइआएँ होइ सत्तण्हं। तप्परओ दु दु पंती. छगवुड्ढी तइअ सगवुड्ढी ॥५॥" इदं च मतमाशाम्बरीयमवसेयं, तत्कर्मप्रकृतिप्राभृते एवास्य मतस्य दर्शनात्। तथा अन्यदपि मतान्तरं करणविभावनायामभिहितं। यथा—"बाहिं माणुसुत्तराओ नगाओ पन्नासं जोअणाणं सहस्साइं गन्तूणं तत्थ पढमेल्लुआ

चंदसूराणं पन्ती, बावत्तरिं चन्दा,बावत्तरिं सूरा" इति, मिलिताश्चैते प्रथमपङ्क्तौ चतुश्चत्वारिंशं शतं,ततः परं शेषपङ्क्तिषु चन्द्रार्कयोः समुदितयोश्चतुष्कस्य चतुष्कस्य वृद्धौ पुष्करवरद्वीपोत्तरार्धेऽष्टमपङ्क्तौ चन्द्रसूर्याणां समुदितानां जातं द्विसप्तत्यधिकं शतं १७२, सर्वसंख्यया तु पुष्करवरद्वीपोत्तरार्धे चन्द्रार्काणां समुदितानां जातानि द्वादश शतानि चतुःषष्ट्यधिकानि, १२६४, अत्र च प्रथमपङ्क्तौ षट्चत्वारिंशल्लक्षसम्बन्धिनः प्रागुक्तस्य परिधेः १४५४६४७७ चतुश्चत्वारिंशेन शतेन १४४ भागे हृते लब्धं चन्द्रस्य सूर्यस्य च परस्परमन्तरमेकं लक्षमेकं सहस्रं सप्तदशोत्तरमेकोनत्रिंशच्च चतुश्चत्वारिंशशतभागाः योजनस्य १०१०१७ $\frac{२९}{१४४}$, एतस्य च द्विगुणने छेद्यछेदकराश्योर्द्वाभ्यामपवर्त्तने च चन्द्रस्य चन्द्रस्य, सूर्यस्य सूर्यस्य च परस्परमन्तरं २०२०३४ $\frac{२९}{७२}$, एवं शेषपङ्क्तिष्वपि परिधिमानं विभाव्य विवक्षितपङ्क्तिगतचन्द्रार्कसंख्यया भागं हृत्वा चन्द्रसूर्याणां, सूर्याणां चन्द्राणां च परस्परमन्तरं बोद्धव्यं, एतन्मतेन च प्रतिद्वीपं प्रतिसमुद्रं च चन्द्रार्कसंख्यानयनाय करणं ग्रन्थविस्तरभयादिह नाभिधीयते, तदर्थिना तु करणविभावना मलयगिरिकृतपूर्वसंग्रहणीटीकातः परिभावनीया, एतन्मतप्रतिपादिके च गाथे इमे—"चोआलसयं पढमिल्लुआए पंतीइ चंदसूराणं । तेण परं पंतीओ, चउरुत्तरिआए वुड्ढीए ॥ १ ॥ बावत्तरि चंदाणं, बावत्तरि सूरिआण पंतीए । पढमाएँ अंतरं पुण, चंदा चंदस्स लक्खदुगं ॥२॥ अत्र "लक्खदुगंति" लक्षद्विकं विंशतिशतैश्चतुस्त्रिंशैर्योजनस्य च द्विसप्ततितमैरे-

[illegible]—"[illegible] चंदस्स अंतरं होइ। पन्नास सहस्साइं जोअणाणं अणूणाइं ॥१॥ [illegible] कोनात्रिंशद्भागैरधिकं बोद्धव्यं ॥६४॥ तदेवमभिहिता सप्रपञ्चं प्रतिद्वीपं प्रतिसमुद्रं च चन्द्रादिसंख्या, साम्प्रतं मनुष्यक्षेत्र एव चन्द्रसूर्यपङ्क्तीनां संख्यादिरूपमाह—

दो दो ससिरविपंती, एगंतरिआ छसट्ठिसंखा य।
मेरुं पयाहिणंती, माणुसखेत्ते परिअडंति॥ ६५ ॥

व्याख्या—द्वे चन्द्रपङ्क्ती द्वे च सूर्यपङ्क्ती यथाक्रममेकया सूर्यपङ्क्त्या चन्द्रपङ्क्त्या चान्तरिते, प्रत्येकं षट्षष्टिचन्द्रसंख्ये षट्षष्टिरविसंख्ये च, जम्बूद्वीपगतं मेरुं प्रदक्षिणयन्त्यौ परिसमन्तादटतो—भ्रमतः। इहायं भावार्थो—यदा जम्बूद्वीपे मेरोर्दक्षिणत एकः सूर्यश्चारं चरति, तदा द्वितीय उत्तरस्यां, तदैव दक्षिणदिग्भागे दक्षिणसूर्यसमश्रेण्या द्वौ सूर्यौ लवणे, षट् धातकीखण्डे, एकविंशतिः कालोदे, षट्त्रिंशत् पुष्करवरद्वीपार्धे चारं चरन्ति। एवमुत्तरतोऽप्युत्तरसूर्यसमश्रेण्या लवणादिषु सूर्याश्चारं चरन्ति। एवं च प्रत्येकं षट्षष्टिसूर्यसंख्ये द्वे सूर्यपङ्क्ती, एवमेव च द्वे चन्द्रपङ्क्ती भवतः। पङ्क्तिद्वये तु समुदितानां मनुष्यक्षेत्रे सूर्याणां द्वात्रिंशं शतं, एवं चन्द्राणामपि ॥६५॥ एवं चन्द्रार्काणां पङ्क्त्या भ्रमिमभिधाय ग्रहादीनामतिदेशेनाह—

एवं गहाइणोऽवि हु, नवरं धुवपासवत्तिणो तारा ।
तं चिअ पयाहिणंता, तत्थेव सया परिभमंति ॥ ६६ ॥

व्याख्या—नवरमत्र नक्षत्रग्रहपङ्क्तिसंख्यागाथे–"छप्पन्नं पंतीओ, नक्खत्ताणं तु मणुअलोगम्मि। छावट्ठी छावट्ठीएँ, होइ इक्किकिआ पंती ॥१॥ छावत्तरं गहाणं, पंतिसयं होइ मणुअलोगम्मि। छावट्ठी छावट्ठीएँ, होइ एक्केक्किआ पंती ॥ २ ॥" तथा चन्द्रादित्यग्रहा नक्षत्रैः सहानवस्थितयोगयुता जम्बूद्वीपगतं मेरुं प्रदक्षिणयन्तो भ्रमन्ति । यान्यपि नक्षत्रतारकाणि सदावस्थितप्रतिनियतमण्डलानि तान्यपि मेरोः प्रदक्षिणावर्त्तमेव भ्रमन्ति। तथा च सूर्यप्रज्ञप्तिः—ते मेरु परिअडंता, पयाहिणावत्तमंडला सव्वे। अणवट्ठिअजोगजुआ, चंदा सूरा गहगणा य ॥१॥ नक्खत्ततारगाणं, अवट्ठिआ मंडला मुणेअव्वा। तेच्चिअ पयाहिणावत्तमेव मेरुं अणुचरंति॥२॥"॥६६॥चन्द्रार्कयोरेव मण्डलवक्तव्यतामाह—

---

१ इह मेरोश्चतुर्दिशं चत्वारो ध्रुवतारा मन्तव्यास्तत्परिवारतारकास्तु तेषामेव ध्रुवतारकाणां चतुर्णां समन्तात् भ्रमन्ति, नतु मेरोः प्रादक्षिण्येनेति श्रीहरिभद्रसूरिकृतक्षेत्रसमासवृत्तौ । 'एकेन चाहोरात्रेण सर्वमपि नक्षत्रं स्वस्य स्वस्य मण्डलस्यार्धं भ्रमणेन पूरयति, सप्तभिः शतैर्द्वात्रिंशदधिकैः प्रविभक्तस्य अर्धमण्डलस्य सत्काभ्यां द्वाभ्यां भागाभ्यामधिकं,परिपूर्णं पुनरात्मीयमात्मीयं मण्डलमेकैकं नक्षत्रं भ्रमणेन पूरयति द्वाभ्यामहोरात्राभ्यां त्रिभिः सप्तषष्ट्यधिकैः शतैः प्रविभक्तस्याहोरात्रस्य सत्काभ्यां द्वाभ्यां भागाभ्यामूनाभ्याम्' इति ग्रन्थान्तरेऽधिकमपि ।

पनरस चुलसीइसयं, इह ससिरविमंडलाइं तक्खित्तं ।
जोअणपणसयदसहिअ, भागा अडयाल इगसट्ठा ॥ ६७ ॥

व्याख्या—इह जम्बूद्वीपे चन्द्रयोः सूर्ययोश्च दक्षिणोत्तरायणे कुर्वतोः प्रतिदिनभ्रमिक्षेत्रलक्षणानि निजबिम्बप्रमाणविष्कम्भाणि यथाक्रमं पञ्चदश चतुरशीत्यधिकशतं च मण्डलानि भवन्ति, तेषां चान्तरालसहितानां सामस्त्येन क्षेत्रविष्कम्भमानं योजनानां पञ्च शतानि दशाधिकानि अष्टचत्वारिंशच्चैकषष्टिभागा योजनस्य ५१० $\frac{४८}{६१}$, तथाहि—सूर्यस्य चतुरशीत्यधिकशतमण्डलानामन्तराणि त्र्यशीत्यधिकं शतं, एषां च विष्कम्भमानं द्वे द्वे योजने, अतस्ते त्र्यशीत्यधिकशतेन गुण्येते, जातानि त्रीणि योजनशतानि षट्षष्ट्यधिकानि ३६६, ये च सूर्यमण्डलविष्कम्भसम्बन्धिनोऽष्टाचत्वारिंशदेकषष्टिभागास्ते चतुरशीत्यधिकशतेन गुण्यन्ते, जातान्यष्टाशीतिशतानि द्वात्रिंशदधिकानि ८८३२, तेषां योजनानयनार्थमेकषष्ट्या भागे हृते लब्धं चतुश्चत्वारिंशं योजनशतमष्टचत्वारिंशच्चैकषष्टिभागा योजनस्य १४४ $\frac{४८}{६१}$ एतत्पूर्वराशौ प्रक्षिप्यते । जातं यथोक्तं ( पूर्वोक्तं ) क्षेत्रमानं । यदा तु सर्वाभ्यन्तरात् मण्डलात्परतो यावत्सर्वबाह्यमण्डलपर्यन्तः सर्वबाह्याद्वा मण्डलादर्वाक् यावत्सर्वाभ्यन्तरमण्डलान्त इत्ययं चारस्याध्वा चिन्त्यते, तदा पूर्णानि पञ्च योजनशतानि दशोत्तराणि, तथाहि—यदि सूर्यस्यैकेनाहोरात्रेण द्वे योजने एकस्य च

योजनस्याष्टाचत्वारिंशदेकषष्टिभागाश्चारक्षेत्रं लभ्यते, ततस्त्र्यशीत्यधिकेनाहोरात्रशतेन किं लभ्यते ? राशित्रयस्थापना १–२ ४८/६१–१८३, अत्र सवर्णनार्थं द्वयोर्योजनयोरेकषष्ट्या गुणने उपरितनाष्टाचत्वारिंशद्भागप्रक्षेपे च जातं सप्तत्यधिकं शतं १७०, एतदन्त्यराशिना त्र्यशीत्यधिकशतेन गुण्यते, जातान्येकत्रिंशत् सहस्राणि शतमेकं दशोत्तरं ३१११०, ततोऽस्य राशेर्योजनानयनार्थमेकषष्ट्या भागे हृते लब्धानि पञ्च योजनशतानि दशोत्तराणि ५१०, एतावती सूर्यस्य विष्कम्भक्षेत्रकाष्ठा। चन्द्रस्य तु मण्डलविष्कम्भः षट्पञ्चाशदेकषष्टिभागा योजनस्य, चारक्षेत्रं पुनः पञ्च योजनशतानि नवोत्तराणि त्रिपञ्चाशच्चैकषष्टिभागा योजनस्य, तथाहि–पञ्चदशानां चन्द्रमण्डलानामन्तराणि चतुर्दश, एषां च प्रत्येकं विष्कम्भमानं पञ्चत्रिंशत् योजनानि त्रिंशदेकषष्टिभागा योजनस्य चत्वारश्च सप्तभागाः एकषष्टिभागस्य ३५–३०/६१ ४/७, यदि च चन्द्रस्यैकेनाहोरात्रेण षट्त्रिंशद्योजनानि पञ्चविंशतिरेकषष्टिभागा योजनस्य चत्वारश्च सप्तभागा एकषष्टिभागस्य च चारक्षेत्रं ३६–२५/६१ ४/७। लभ्यते । ततश्चतुर्दशभिरहोरात्रैः किं लभ्यते ? राशित्रयस्थापना १–३६ २५/६१–४/७–१४। अत्र सवर्णनार्थमादौ षट्त्रिंशत एकषष्ट्या गुणने उपरितनपञ्चविंशतिभागप्रक्षेपे जातानि द्वाविंशतिशतानि एकविंशत्यधिकानि २२२१, एषां सप्तभिर्गुणने उपरितनभागचतुष्टयक्षेपे च जातानि पञ्चदश सहस्राणि पञ्च शतान्येकपञ्चाशदधिकानि १५५५१, ततो योजनानयनार्थं छेदकराशिरप्येकषष्टिः सप्तभिर्गुण्यते, जातानि चत्वारि शतानि सप्तविंशत्यधिकानि ४२७, तत उपरितनो राशिश्चतुर्दशभिरङ्कैर्गुण्यते, जाते द्वे लक्षे सप्तदश सहस्राणि सप्त शतानि चतुर्दशा-

घिकानि २१७७१४, ततश्छेद्यच्छेदकराश्योः ससमिरपवर्तने जातश्छेद्यराशिरेकाविंशत् सहस्राणि शतमेकं द्युत्तरं २११०२ छेदकराशिरेकषष्टिः ६१, अनया भागे हृते भवति यथोक्ता ५०९।$\frac{५}{६१}$। कष्ठस्य विष्कम्भक्षेत्रकाष्ठा, तस्यां चावधिभूतचन्द्रमण्डलविष्कम्भप्रक्षेपे सामस्त्येन क्षेत्रं यथोक्तं ५१०।$\frac{४८}{६१}$ भावनीयमिति ॥ ६७ ॥ सम्प्रति चन्द्रः सूर्यो वा कियज्जम्बूद्वीपे लवणे वा प्रविशतीत्याह—

> ससिरविणो लवणम्मी, जोअणसय तिण्णि तीसअहियाइं ।
> असिअं तु जोअणसयं, जम्बूदीवम्मि पविसंति ॥ ६८ ॥

व्याख्या—सुगमा, भावार्थस्तु जम्बूद्वीपप्रज्ञप्त्याद्यनुसारतोऽभिधीयते—त्रीणि योजनशतानि त्रिंशदधिकानि लवणमवगाह्य चन्द्रस्य दश रवेरेकोनविंशं शतं मण्डलानि भवन्ति। अशीत्यधिकं योजनशतं च जम्बूद्वीपमवगाह्य चन्द्रस्य पञ्च, रवेस्तु पञ्चषष्टिर्मण्डलानि, उपरितनास्तु लवणगता अष्टाचत्वारिंशद्भागाः स्तोकत्वादत्र नोक्ताः। जम्बूद्वीपे च सूर्यमण्डलेषु वृद्धवादो यथा—मेरोः पूर्वतो निषधमूर्द्धनि त्रिषष्टिर्मण्डलानि, हरिवर्षजीवाकोट्यां च द्वे, अपरतो नील-

वत्पर्वते त्रिषष्टिः रम्यकजीवाकोट्यां च द्वे इति। नक्षत्रतारकाणां तु सदावस्थितं प्रत्येकमेकमेव मण्डलं, दक्षिणोत्तरायणे तेषां न त्व इत्यर्थः ॥ ६८ ॥ अधुना द्वीपोदधिषु ग्रहनक्षत्रताराणां सङ्ख्याज्ञानायोपायमाह—

गहरिक्खतारसंखं, जत्थेच्छसि नाउमुयहि दीवे वा ।
तस्ससिहि एगससिणो, गुण संखं होइ सव्वग्गं ॥ ६९ ॥

व्याख्या—अत्र तारशब्दः पुंस्त्रीलिङ्गे 'भकनीनिकयोस्तार' इति वचनात्ततो यत्रोदधौ द्वीपे वा ग्रहनक्षत्रतारसंख्या ज्ञातुमिच्छसि तस्योदधेर्द्वीपस्य वा शशिभिरेकस्य शशिनः सम्बन्धिनीं ग्रहनक्षत्रतारसंख्यां गुणय, तथा च भवति तत्रोदधौ द्वीपे वा ग्रहनक्षत्रताराणां सर्वाग्रं—सर्वसंख्या । यथा लवणे किल नक्षत्रादिमानं ज्ञातुमिष्टं, लवणे च चत्वारश्चन्द्राः, तत एकस्य शशिनः परिवारभूतानामष्टाशीतेर्ग्रहाणामष्टाविंशतेर्नक्षत्राणां पञ्चसप्तत्युत्तरनवशताधिकषट्षष्टिसहस्रसंख्यकोटीकोटीनां ताराणां च प्रत्येकं चतुर्भिर्गुणने जातं ग्रहाणां त्रीणि शतानि द्विपञ्चाशदधिकानि ३५२ नक्षत्राणां द्वादशोत्तरं शतं ११२ ताराणां तु कोटाकोटीनां द्वे लक्षे सप्तषष्टिसहस्राणि नव शतानि २६७९००, उक्तं च—"चत्तारि चेव चंदा, चत्तारि(य) सूरिया लवणतोए। बारं नक्खत्तसयं, गहाण तिन्नेव बावन्ना ॥१॥ दो चेव सयसहस्सा, सत्तट्ठी

खलु भवे सहस्सा य । नव य सया लवणजले, तारागणकोडिकोडीणं ॥ २ ॥" एवं सर्वद्वीपोदधिषु भावनीयम् ॥ ६९ ॥ उक्ता ज्योतिष्कविमानवक्तव्यता, साम्प्रतं वैमानिकविमानवक्तव्यतामाह—

बत्तीसट्ठावीसा, बारस अट्ठ चउ विमाणलक्खाइं ।
पन्नास चत्त छ सहस्स, कमेण सोहम्ममाईसु ॥ ७० ॥
दुसु सय चउ दुसु सयतिगमिगारसहियं सयं तिगे हिट्ठा ।
मज्झे सत्तुत्तरसयमुवरितिगे सयमुवरि पंच ॥ ७१ ॥

व्याख्या—सौधर्मे विमानानां द्वात्रिंशल्लक्षाणि ३२००००० । एवमीशानेऽष्टाविंशतिः २८००००० । सनत्कुमारे द्वादश १२००००० । माहेन्द्रेऽष्टौ ८००००० । ब्रह्मलोके चत्वारि ४००००० । तथा लान्तके पञ्चाशत्सहस्राः ५०००० । एवं महाशुक्रे चत्वारिंशत्सहस्राः ४०००० । सहस्रारे षट् ६००० । तथा द्वयोः—आनतप्राणतयोः समुदितयोः चत्वारि शतानि ४०० । एवमग्रेऽपि समुदितत्वं भाव्यं । द्वयोः—आरणाच्युतयोस्त्रीणि शतानि ३०० । अधस्तनग्रैवेयकत्रिके एकादशाधिकं शतं १११ । मध्यमत्रिके सप्तोत्तरं शतं १०७ । उपरितनत्रिके शतं १०० । उपरीति—सर्वान्तिमप्रतरे पञ्च विमानानि ५ । ॥ ७० ॥ ७१ ॥ अथ विमानानां सर्वसङ्ख्यामावलिकादिस्वरूपं चाह—

चुलसीइलक्खसत्ताणवइ सहस्सा विमाण तेवीसं ।
सव्वग्गमुड्ढलोगंमि इंदया विसट्ठि पयरेसु ॥ ७२ ॥

चउदिसि चउ पंतीओ, बासट्ठि विमाणआ पढमपयरे ।
उवरि एक्केक्कहीणा, अणुत्तरे जाव एक्केक्कं ॥ ७३ ॥

इंदय वट्टा पंतिसु, तो कमसो तंसचउरसा वट्टा ।
विविहा पुप्फवकिण्णा, तयंतरे मुत्तु पुव्वदिसिं ॥ ७४ ॥

व्याख्या—गाथात्रयमपि सुगमं, तथापि किञ्चिदुच्यते—तत्र सर्वाग्रं—सर्वसंख्या अङ्कतः ८४९७०२३ । एषां च विमानानां स्वरूपं—'अच्चंतसुरहिगंधा, फासे नवणीयमउअसुहफासा । निच्चोज्जोआ रम्मा, सयंपभा ते विरायंति ।१।' इह चोर्द्धलोके द्वाषष्टिः प्रतराः 'दुसु तेरस दुसु बारस, छप्पण चउ चउ दुगे दुगे अ चउ । गेविज्जणुत्तरे दस, बिसट्ठि पयरा उवरि लोए ॥१॥' इति आगमभिधानात्, तेषु च प्रत्येकं मध्यभागे विमानेन्द्रकस्य भावात् द्वाषष्टिर्विमानेन्द्रकाः । तद्यथा—'उडु चंद रयय वग्गू, वीरिअ वरुणे तहेव आणंदे । बंभे कंचण रुइले ( गे ) वंचे अरुणे दिसे चेव ॥ १ ॥

वेरुलिअ रुअग रुइरे, अंके फलिहे तहेव तवणिज्जे। मेहे अग्घ हलिद्दे, नलिणे तह लोहिअक्खे य ॥ २ ॥ वइरे अंजण वरमाल अरिट्ठे तहय देवसोमे अ। मंगल बलभद्दे या, चक्क गया सोत्थि नंदिआवत्ते ॥ ३ ॥ आभंकरे अ गिद्धी, केऊ गरुले अ होइ बोद्धव्वे। बंभे बंभहिए पुण, बंभोत्तर लंतए चेव ॥ ४ ॥ महसुक्क सहस्सारे, आणय तह पाणए अ बोद्धव्वे। पुप्फेऽलंकारे आरणे अ तह अच्चुए चेव ॥५॥ सुदंसणे सुप्पबुद्धे, तहा होइ मणोरमे। तत्तो य सव्वओभद्दे, विसाले सुमणे इअ ॥ ६ ॥ सोमणसे पीइकरे, आइच्चे चेव होइ बोद्धव्वे। सव्वट्ठसिद्धनामे, सुरिंदया एव बासट्ठि ॥ ७ ॥' एषां च चतुर्दिशमेकैकपङ्क्तिसद्भावाच्चतस्रः पङ्क्तयो भवन्ति, तासु प्रथमप्रतरे द्वाषष्टिविमानिकाः, एकैकस्यां पङ्क्तौ द्वाषष्टिर्द्वाषष्टिर्विमानानि भवन्तीत्यर्थः। तत ऊर्ध्वं द्वितीयादिषु प्रतरेष्वेकैकविमानहीनाः पङ्क्तयो भवन्ति, यावदनुत्तरे चतुर्दिशमेकैकमावलिकासु विमानं। तत्र प्रथमप्रतरे द्वाषष्टिरावलिकागतविमानान्येवं—एकैकं देवद्वीपे, द्वे द्वे नागोदधौ, चत्वारि यक्षद्वीपे, अष्टावष्टौ भूतोदधौ, षोडश षोडश स्वयम्भूरमणद्वीपे, एकत्रिंशत् स्वयम्भूरमणोदधौ, एवमुपरितनप्रतरेष्वप्यावलिकागतविमानान्यधस्तनप्रतरावलिकागतविमानैः समश्रेणीनि वाच्यानि। यदाह—"वट्टं वट्टस्सुवरिं, तंसं तंसस्स उवरिमं होइ। चउरंसे चउरंसं, उड्ढं तु विमानसेढीओ ॥ १ ॥" केवलमुपरितनप्रस्तटेषु पूर्वादिषु दिक्षु पर्यन्तवर्त्तिन एकैकविमानस्य हानेश्चत्वारि चत्वारि विमानानि पात्यन्ते, यावद् द्वाषष्टितमे प्रस्तटे

१ एषा तृतीयागाथा पूर्वार्द्धसमोत्तरार्द्धा गीतिर्वाऽपक्षेपा। २ उप्परिं इतिपा।

चतुर्दिशमेकैकं देवद्वीपस्योपरि त्र्यस्रं विमानमिति । तथा सर्वेष्वपि प्रतरेषु पङ्क्तिमध्यगता इन्द्रकाख्यविमाना वृत्तास्तदनन्तरं त्र्यस्रास्ततश्चतुरस्रास्ततो वृत्ताः, तदनन्तरं पुनरपि क्रमेण त्र्यस्रादयो यावत् श्रेणिपर्यन्तः । यदुक्तम्—"सव्वेसु पत्थडेसुं, मज्झे वट्टं अणंतरं तंसं । तयणंतर चउरंसं, पुणोवि वट्टं तओ तंसं ॥१॥ वट्टं च वलयगंपिव, तंसं सिंघाडगंपिव विमाणं । पुंण अक्खाडयसंठिअ, चउरंसविमाणयं भणियं ॥ २ ॥ तथा—सव्वे वट्टविमाणा, एगदुवारा हवंति नायव्वा । तिन्नि अ तंसविमाणे, चत्तारि उ हुंति चउरंसे ॥३॥ पागारपरिक्खित्ता, वट्टविमाणा हवंति सव्वेवि । चउरंसविमाणाणं, चउद्दिसिं वेइआ होइ ॥ ४ ॥ जत्तो वट्टविमाणा, तत्तो तंसस्स वेइआ होइ । पागारो बोद्धव्वो, अवसेसेसुं तु पासेसुं ॥ ५ ॥" अत्र वेदिका मुण्डप्राकारः । तासां च पूर्वोक्तानां पङ्क्तीनामन्तरेषु पूर्वदिशं मुक्त्वा शेषासु—दक्षिणोत्तरपश्चिमासु दिक्षु पङ्क्तिगतविमानक्षेत्रपरिहारेण प्राङ्गणे पुष्पाणीव यतस्ततोऽवकीर्णानि विमानानि भवन्ति। यदुक्तम्—पुप्फावकिण्णगा पुण, दाहिणओ पच्छिमेण उत्तरओ । पुव्वेण विमाणिंदस्स, नत्थि पुप्फावकिण्णा उ ॥१॥" तानि च पुष्पावकीर्णानि विविधानि नन्द्यावर्तखड्गादिविचित्रसंस्थानानि । यदाह—"पुप्फावकिण्णगा पुण, अणेगविहरूवसंठाणा" । स्थापना ॥७२–७३–७४॥सम्प्रति प्रतिकल्पमावलिकागतविमानसंख्यानयनाय करणमाह—

---

१ चोरंसविमाणाणं, पुण अक्खाडयसंठियं भणियं इति प्रत्यन्तरे ।

पढमंतिमपयरावलि, विमाणमुहभूमि तस्समासद्धं ।
पयरगुणमिट्ठकप्पे, सव्वग्गं पुप्फकिण्णिअरे ॥ ७५ ॥

व्याख्या—सौधर्म्मेशानादिकल्पक्रमेण प्रथमप्रतरगतावलिकाविमानसंख्या मुखं, अन्तिमप्रतरगतावलिकाविमानसंख्या तु भूमिः, तयोः समासो—मीलनं कार्यं, ततस्तस्यार्द्धं, तच्च प्रतरैः—इष्टकल्पगतैः प्रस्तटैर्गुण्यते, ततो विवक्षिते कल्पे आवलिकाविमानानां सर्वसंख्या भवति । तत्र सौधर्म्मेशानयोर्मुखे द्वे शते एकोनपञ्चाशदधिके २४९, भूमिर्द्वे शते एकोत्तरे २०१, अनयोः समासश्चत्वारि शतानि पञ्चाशदधिकानि ४५०, तदर्द्धं द्वे शते पञ्चविंशत्यधिके २२५, ते स्वप्रतरैस्त्रयोदशभिर्गुण्यन्ते, जातं सौधर्म्मेशानवलये आवलिकाविमानानां सर्वाग्रमेकोनत्रिंशच्छतानि पञ्चविंशत्यधिकानि २९२५, शेषाणि तु पुष्पावकीर्णानि, तत्र सौधर्म्मे सर्वसंख्यया विमानानि द्वात्रिंशल्लक्षाः, ईशाने त्वष्टाविंशतिरुभये षष्टिः ६००००००, एभ्यः पूर्वोक्त २९२५ श्रेणिप्रतिबद्धविमानशोधने भवन्ति पुष्पावकीर्णान्येकोनषष्टिर्लक्षाः सप्तनवतिः सहस्राणि पञ्चसप्तत्यधिकानि ५९९७०७५, एवं शेषकल्पेष्वपि भावना कार्या, सा च नोच्यते ग्रन्थगौरवभयात् । दिग्मात्रदर्शनार्थं तु सौधर्म्मेशानयोः सनत्कुमारमाहेन्द्रयोर्ब्रह्मलोके लान्तके शुक्रे सहस्रारे आनतप्राणतयोरारणाच्युतयोरधस्तनग्रैवेयकत्रिके मध्यमग्रैवेयकत्रिके उपरितनग्रैवेयकत्रिके अनुत्तरेषु सकलोर्द्धलोके च

लघूपायं सुखावसेयं यन्त्रकं प्रदर्श्यते । तस्य स्थापना । यदिवा सकलोर्द्धलोके सर्वसंख्यया आवलिकागतविमानानयनेऽयमन्योपायो–यथाऽनुत्तरविमानप्रतरात् प्रभृति सौधर्माद्यप्रतरं यावदेकैकस्यां दिशि द्वाषष्टिर्द्वाषष्टिरावलिकाः, तत्रानुत्तरप्रतरावलिकासु चतसृष्वप्येकैकं विमानं, तदनन्तरं क्रमादेकैकविमानवृद्धिस्तावद्भवति यावत् सौधर्म्मे प्रथमप्रतरावलिकासु द्वाषष्टिर्द्वाषष्टिर्विमानानि, तत्र च द्वाषष्टेः सङ्कलिते एकोनविंशतिः शतानि त्रिपञ्चाशदधिकानि १९५३, तानि च चतुर्दिशं भवन्तीति चतुर्भिर्गुणितान्यष्टसप्ततिः शतानि द्वादशोत्तराणि ७८१२, एषु च द्वाषष्टेरिन्द्रकाणां प्रक्षेपे भवन्ति सर्वसंख्यया ऊर्ध्वलोके पङ्क्तिविमानान्यष्टसप्ततिः शतानि चतुःसप्तत्यधिकानि, ७८७४ । अभिहितानामेव मुखभूमिपङ्क्तिविमानप्रकीर्णकविमानानां संग्रहार्था इमा गाथाः–"दोन्नि सय अउणवन्ना, सत्ताणउअं सयं च बोद्धव्वं । अउणावन्नं च सयं, सयमेगं पन्नवीसं च ॥ १ ॥ पंचुत्तरसयमेगं, अउणानउई य होइ बोद्धव्वा । तेवत्तरि सगवन्ना, इगयालीसा य हेट्ठिमए ॥ २ ॥ अउणत्तीसा य भवे, सत्तरस य पंच चेव आईओ । कप्पेसु पत्थडाणं, बोद्धव्वा उड्ढलोगम्मि ॥ ३ ॥ एगाहिअदोन्नि सया, तेवन्नसयं सयं च उणतीसं । तत्तो नवाहिअसयं, तिनवइ सत्तुत्तरी चेव ॥ ४ ॥ एगट्ठी पणयाला, तेत्तीसा एक्कवीस नव चेव । कप्पेसु पत्थडाणं, भूमीओ हुंति नायव्वा ॥ ५ ॥ दो चेव सहस्साइं, नव चेव सयाइं पन्नवीसाइं । आवलिआसु विमाणा, सोहम्मीसाणकप्पिसुं ॥६॥ अउणट्ठिसयसहस्सा, सत्ताणउई तहा सहस्साइं । पन्नुत्तरी विमाणा, हवंति पुप्फावकिण्णाणं ॥ ७ ॥ दो चेव

सहस्साइं, सयसेयं चेव होइ नायव्वं । आवलिआसु विमाणा, सणंकुमारे अ माहिंदे ॥ ८ ॥ दस नव य सयसहस्सा, सत्ताणउई तहा सहस्साइं । नव य सया संपुन्ना, हवंति पुप्फावकिण्णाणं ॥ ९ ॥ अट्ठ सया चोव्वीसा, बंभे कप्पंमि होंति आवलिया । लक्खतिगं नवनउअं, छावट्ठिसयं पइन्नाणं ॥ १० ॥ अउणापन्नसहस्सा, पइन्नगाणं तओ य पन्नरस । पंच य पंचासीआ, आवलिआ लंतए कप्पे ॥११॥ तिन्नि सया छन्नउआ, आवलिआ खलु भवे महासुक्के । उणयालीस सहस्सा, छच्च सय पइन्नगा चउरो ॥ १२ ॥ तिन्नि सया बत्तीसा, आवलिआ खलु भवे सहस्सारे । बत्तीसं सयछप्पन्न अट्ठसट्ठी, पइन्नगाणं तु बोद्धव्वा ॥ १३ ॥ आणयपाणयकप्पे, दोन्नि सया अट्ठसट्ठि आवलिआ । सेसं च, होइ पुप्फावकिण्णाणं ॥ १४ ॥ दुन्नि सया चउरहिया, आवलिआ आरणच्चुए कप्पे । छन्नउइं च विमाणा, हवंति पुप्फावकिण्णाइं ॥ १५ ॥ हेट्ठिमगेविज्जाणं, एक्कारसयं भवे विमाणाणं । आवलिआसु विमाणा, नत्थि उ पुप्फावकिण्णत्थ ॥ १६ ॥ मज्झिमगेविज्जाणं, आवलि पन्नत्तरी विमाणाइं । बत्तीसं च विमाणा, हवंति पुप्फावकिण्णत्थ ॥१७॥ उवरिमगेविज्जाणं, उगुआलीसं हवंति आवलिआ । एगट्ठी अ विमाणा, हवंति पुप्फावकिण्णाइं ॥१८॥ विजए य वेजयंते, जयंत अपराजिए अ सव्वट्ठे । आवलिआसु विमाणा, नत्थि तु पुप्फावकिण्णत्थ ॥१९॥ सत्तेव सहस्साइं, सयाइं चोवत्तराइं अट्ठ भवे । आवलिआसु विमाणा, सेसा पुप्फावकिण्णत्थ ॥ २० ॥ चुलसीइ सयसहस्सा, उणणा-

१ एआरं लखाए विभत्तसवं एवि पा पाठः ।

नउइ भवे सहस्साइं। एगूणं च दिवड्ढं, सयं तु पुप्फावकिण्णाणं ॥२१॥" ॥७५॥ अथ कस्मिन् कल्पे कस्मिन्प्रतरे कस्यां वाऽऽवलिकायां कियन्ति विमानानि त्र्यस्राणि कियन्ति चतुरस्राणि कियन्ति वृत्तानीति निरूपणाय करणमाह—

इगदिसिपंतिविमाणा, तिविभत्ता तंसचउरसा वट्टा ।
तंसेसु सेसमेगं, खिव सेसदुगस्स एक्केक्कं ॥ ७६ ॥
तंसेसु चउरंसेसु अ, तो रासितिगं पि चउगुणं काउं ।
वट्टेसु इंदयं खिव, पयरधणं मीलिअं कप्पे ॥ ७७ ॥

व्याख्या–इष्टे कल्पे इष्टे च प्रतरे विमानेन्द्रकादेकस्यां दिशि यानि पङ्क्तिविमानानि तानि त्रिभिर्विभक्तानि–त्रिषु स्थानेषु स्थापितानि क्रमात् त्र्यस्राणि चतुरस्राणि वृत्तानि च भवन्ति। त्रिधा विभक्तेषु च यद्येकं विमानं शेषमुद्धरितं भवति तदा तत् त्र्यस्रेषु क्षिप, वृत्तादनन्तरं त्र्यस्रस्य भावात्, यदा तु विमानद्विकमुद्धरति तदा तन्मध्यादेकं त्र्यस्रेषु एकं चतुरस्रेषु क्षिप, वृत्तादनन्तरं त्र्यस्रस्य तदनन्तरं च चतुरस्रस्य भावात्, एवमेकदिक्पङ्क्तौ त्र्यस्रचतुरस्र-वृत्तानां संख्या भवति । एतावन्ति च विमानानि चतुर्दिशं भवन्तीति राशित्रिकमपि चतुर्गुणं कृत्वा वृत्तेषु इन्द्रकं

क्षिप, तस्य वृत्तत्वात्, तत इष्टे प्रतरे घनं—त्र्यस्रादीनां संख्या भवति। तत्र प्रतराणां त्रयोदशादीनां घनमेकत्र मीलितं सत् विवक्षिते सौधर्म्मैशानादिके कल्पे घनं भवति। तत्र सौधर्म्मैशानवलये प्रथमे प्रतरे एकस्यां दिशि द्वाषष्टिर्विमानानि, तेषां त्रिभिर्भागे लब्धानि त्र्यस्रचतुरस्रवृत्तानि प्रत्येकं विंशतिः, शेषे द्वे विमाने, तन्मध्यादेकं त्र्यस्रेषु द्वितीयं चतुरस्रेषु क्षिप्यते, तत एकस्यां पङ्क्तौ जातानि त्र्यस्राण्येकविंशतिः, चतुरस्राण्येकविंशतिः, वृत्तानि विंशतिः, ततो राशित्रयमपि चतुर्गुणं कृत्वा वृत्तेष्विन्द्रकः प्रक्षिप्यते, ततः प्रथमे प्रतरे जातानि त्र्यस्राणि चतुरशीतिः, चतुरस्राणि चतुरशीतिः, वृत्तान्येकाशीतिः। ततो द्वितीये प्रतरे एकस्यां दिशि एकषष्टेस्त्रिभिर्भागे लब्धानि त्र्यस्रादीनि प्रत्येकं विंशतिः, शेषमेकं त्र्यस्रेषु क्षिप्यते, ततो राशित्रयस्य चतुर्गुणने इन्द्रकस्य च वृत्तेषु प्रक्षेपे जातानि द्वितीये प्रतरे त्र्यस्राणि चतुरशीतिः, चतुरस्राण्यशीतिः, वृत्तान्येकाशीतिः। तृतीये तु प्रतरे एकस्यां दिशि षष्टेस्त्रिभिर्भागे लब्धानि त्र्यस्रादीनि प्रत्येकं विंशतिः, तेषां चतुर्गुणने इन्द्रकस्य च वृत्तेषु प्रक्षेपे जातानि त्र्यस्राण्यशीतिः, चतुरस्राण्यशीतिः, वृत्तान्येकाशीतिः। एवं शेषप्रतरेष्वपि भावनीयम्। त्रयोदशस्वपि च प्रतरेषु त्र्यस्रादिसंख्यामीलनेन जातानि सौधर्म्मैशानवलये त्र्यस्राण्यष्टाशीत्यधिकानि नव शतानि, चतुरस्राणि द्वासप्तत्यधिकानि नव शतानि, वृत्तानि पञ्चषष्ट्यधिकानि नव शतानि, एवं शेषकल्पेष्वपि भावना कार्या। केवलं सौधर्म्मैशानसुरम्यादिषु त्रयोदशसु स्थानेष्वावलिकासु वृत्तत्र्यस्रचतुरस्राणां विमानानां पृथक्संख्यानिरूपणाय यन्त्रकस्थापना।

गाथाश्चात्र—"पन्नट्ठमट्ठसीआ; दोसत्तरिगा य नव नव सयाओ । सोहम्मगईसाणे, वट्टा तंसा य चउरंसा ॥ १ ॥ छच्च सया बाणउआ, सत्त सया बारसोत्तरा होंति । छच्च सया छन्नउआ, वट्टाइ सणंकुमारमाहिंदे ॥ २ ॥ चोवत्तरचुलसीआ, छसुत्तरया दुवे दुवि सयाओ । कप्पंमि बंभलोए, वट्टा तंसा य चउरंसा ॥ ३ ॥ तेणउअं चेव सयं, दो चेव सया सयं च बाणउअं । कप्पंमि लंतयम्मी, वट्टा तंसा य चउरंसा ॥ ४ ॥ अट्ठावीसं च सयं, छत्तीससयं सयं च बत्तीसं । कप्पंमि महासुक्के, वट्टा तंसा य चउरंसा ॥ ५ ॥ अट्ठोत्तरं च सोलं, अट्ठसयं चेव होअणूणं तु । कप्पंमि सहस्सारे, वट्टा तंसा य चउरंसा ॥ ६ ॥ अडसीई बाणउई, अट्ठासीई अ होइ बोद्धवा । आणयपाणयकप्पे, वट्टा तंसा य चउरंसा ॥ ७ ॥ चउसट्ठी बावत्तरि, अडसट्ठी चेव होइ बोद्धवा । आरणअच्चुअकप्पे, वट्टा तंसा य चउरंसा ॥ ८ ॥ पणतीसा चत्ताला, छत्तीसा हेट्ठिगंमि गेविज्जे । तेवीस अट्ठवीसा, चउवीसा चेव मज्झिमए ॥ ९ ॥ एक्कारस सोलस बारसेव गेविज्जउवरिमे होंति । एगं वट्टं तंसा, चउरो अ अणुत्तरविमाणा ॥१०॥ पणवीसं चासीआ, छवीसं चेव अट्टसीआ य । छवीस चउरसहिआ, वट्टाईआण सवग्गं ॥ ११ ॥" अत्र 'पणवीसं छवीसंति' च शतानि, शेषप्रपञ्चश्चात्र देवेन्द्रकनरकेन्द्रकादेरवसेयो, ग्रन्थविस्तरभयादत्र दिग्मात्रं दर्शितम्। इह च सौधर्म्मैशानवलये सनत्कुमारमाहेन्द्रवलये च दक्षिणोत्तरदिग्द्वयभेदतः प्रत्येकमिन्द्रद्वयभावान्न ज्ञायते कस्य कियन्ति पङ्क्तिविमानान्याभाव्यानीति तद्विभागप्रदर्शनाय गाथा—"जे दक्खिणेण इंदा, दाहिणओ आवली मुणेअवा । जे पुण

उत्तरसंदा, उत्तरओ णायव्वी सेसि ॥ १ ॥ पुव्वेण पच्छिमेण य, सामण्णा आवली मुणेयव्वा । जे पुण वट्टविमाणा, मज्झिल्ला दाहिणिल्लाणं ॥ २ ॥ पुव्वेण पच्छिमेण य, जे वट्टा तेवि दाहिणिल्लस्स । तंसचउरंसगा पुण, सामण्णा हौंति दोण्हंपि ॥ ३ ॥" अत्र 'सामण्णा हौंति दोण्हंपि' त्ति दाक्षिणात्येन्द्रस्यौदीच्येन्द्रस्येत्यर्थः । सौधर्मो-दिसु चतुर्षु प्रत्येकं पुष्पावकीर्णसंख्यानियमस्तु यथा—"चउसय छप्पीसा, चत्तारि सया य हौंति चउणउया । चत्तारि उ छासीया, सोहम्मे हुंति वट्टाई ॥ १ ॥" वृ । ७२७ त्र्य । ४९४ च ४८६ । सर्वसंख्या त्वेषां सप्तदश शतानि सप्तोत्तराणि १७०७, शेषाणि पुष्पावकीर्णानि, यथा "एगतीसं सयसहस्सा, अट्ठाणउई भवे सहस्सा य । दो य सया तेणउया, सोहम्मे पुप्फकिण्णाणं ॥१॥" ३१९८२९३ । उभयं द्वात्रिंशल्लक्षाः ३२००००० । ईशाने यथा—"एमेव य ईसाणे, नवरं वट्टं न होइ नाणत्तं । दोसय अट्ठत्तीसा २३८, सेसा जह चेव सोहम्मे ॥ २ ॥" सर्वसंख्यया तु द्वादश शतान्यष्टादशोत्तराणि १२१८, उक्तं च—"सत्तरस सया सत्तुत्तरा उ सोहम्मि आवलिविमाणा । बारस अट्ठारहिया, ईसाणे आवलिविमाणा ॥ ३ ॥" शेषपुष्पावकीर्णसंख्या तु—"सत्तावीसं लक्खा, अट्ठाणउई भवे सहस्साइं । सत्त सया बासीया, ईसाणे पुप्फकिण्णाणं" २७९८७८२ उभयमीलनेऽष्टाविंशतिर्लक्षाः २८००००० , सनत्कुमारे माहेन्द्रे च यथा—"पंच सया बावीसा, तिन्नेव सया उ हौंति छप्पन्ना । तिन्नि सया अडयाला, सणंकुमारस्स वट्टाइं ॥ १ ॥

वृ० ५२२ त्र्य० ३५६ च० ३४८ । सत्तरिसयं अणूणं, तिन्नेव सया हवंति छप्पन्ना । तिन्नि सया अडयाला, वट्टाइ सहिं दसण्हस्स ॥ २ ॥ वृ० १७० त्र्य० ३५६ च० ३४८ । सर्वसंख्या तूभयत्र—बारस सय छव्वीसा, कप्पंमि सणंकुमारि-आवलिया । अट्ठसया चोवत्तरि, विमाण माहिंद आवलिआ ॥ ३ ॥ १२२६ । ८७४ । द्वयोरपि पुष्पावकीर्णानि—एक्कारस लक्खाइं, अट्ठाणउई भवे सहस्साइं । सत्त सया चोवत्तरि, हवंति पुप्फावकिण्णाणं ॥ ४ ॥ ११९८७७४ । सत्तेव सयसहस्सा, नवनउई खलु भवे सहस्साइं । सयमेगं छवीसं, हवंति पुप्फावकिण्णाणं ॥ ५ ॥ ७९९१२६ । उभय-मीलनेन सनत्कुमारे ( द्वादश लक्षाः ) १२००००० माहेन्द्रे चाष्टौ लक्षाः ८००००० । आनतप्राणतयोस्तु समुदितयोरेक एवेन्द्र इति न तत्र विमानानामाभाव्यत्वविभागः, एवमारणाच्युतयोरपि । तथा सर्वेष्वपि कल्पेषु स्वस्वकल्पान्त्यप्रस्तरे निजकल्पावतंसकानि—इन्द्रनिवासयोग्यानि विमानानि भवन्ति, तेषां चतुर्दिशं लोकपालानां विमानानि, उक्तं च—कप्पस्स अंतपयरे, निअकप्पवर्डिसया विमाणाओ । इंदनिवासा तेसिं, चउद्दिसं लोगपालाणं ॥ १ ॥ विमानानां च परस्परमन्तरविभागो यथा—आवलिअविमाणाणं, तु अंतरं निअमसो असंखिज्जं । संखिज्जमसंखिज्जं, भणियं पुप्फावकिण्णाणं ॥ १ ॥ अथ लोकान्तिका देवाः कस्मिन् कल्पे केषु च विमानेषु वसन्तीति ? कथ्यते, तत्र जम्बू-द्वीपात्तिर्यगसंख्यातान् द्वीपसमुद्रान् व्यतिक्रम्यारुणवरो द्वीपस्तद्वेदिकापर्यन्तात् द्विचत्वारिंशद्योजनसहस्राण्यरुण-वरं समुद्रमवगाह्यात्रान्तरे जलोपरितनतलादूर्ध्वमप्कायमयो महान्धकाररूपस्तमस्कायः सप्तदश योजनशतानि

एकविंशत्यधिकानि यावत् समभित्त्याकारतया गत्वा तदनन्तरं तिर्यक् प्रविस्तरन् सौधर्मेशानसनत्कुमारमाहे-
न्द्ररूपान् चतुरोऽपि कल्पानावृत्त्य ऊर्ध्वं ब्रह्मलोककल्पे तृतीये रिष्टविमानप्रस्तटे निष्ठितः, अयं चाधः समभित्ति-
रूपतया वलयाकारत्वात् शरावपुटसंस्थानः, ऊर्ध्वं कुक्कुटपञ्जरकसंस्थितः, तथाऽप्कायादित आरभ्य ऊर्ध्वं संख्येय-
योजनानि आयामविस्तारतः संख्यातानि योजनानि, ततः परमसंख्यातानि, परिक्षेपेण तु सर्वत्राप्यसंख्यातान्येव,
अधस्तमस्कायस्य संख्यातविस्तारत्वेऽप्यसंख्यातद्वीपपरिक्षेपस्यासंख्यातत्वात् । स्थापना । अस्य च महत्त्वमेव-
मागमज्ञाः प्रज्ञापयन्ति, यथा—यो देवो महर्द्धिको यया गत्या तिसृभिश्चप्पुटिकाभिरेकविंशतिवारान् सकलं
जम्बूद्वीपमनुपरिवृत्त्यागच्छेत्, स एव देवस्तयैव गत्या षड्भिरपि मासैः संख्यातयोजनविस्तारमेव तमस्कायं व्यति-
व्रजेन्नेतरमिति । रिष्टप्रस्तटे च रिष्टविमानस्य चतुर्दिशं सचित्ताचित्तपृथिवीपरिणामरूपे द्वे द्वे कृष्णराज्यौ स्तः ।
तथाहि—पूर्वस्यां दक्षिणोत्तरायते तिर्यग् विस्तीर्णे, एवं दक्षिणस्यां पूर्वापरायते, अपरस्यां दक्षिणोत्तरायते, उत्तरस्यां
पूर्वापरायते । तत्र पौरस्त्याऽभ्यन्तरा कृष्णराजी दक्षिणबाह्यां कृष्णराजीं स्पृशति, एवं दक्षिणाभ्यन्तरा पश्चिम-
बाह्यां, पश्चिमाभ्यन्तरा उत्तरबाह्यां, उत्तराभ्यन्तरा पूर्वबाह्यामिति, एवं चाक्षपाटकसंस्थिता अष्टावप्येता भवन्ति ।
स्थापना । कोणविभागस्त्वेवम्—पुव्वावरा छलंसा, तंसा पुण दाहिणुत्तरा बज्झा । अब्भिन्तरचउरंसा, सव्वावि
अ कण्हराईओ ॥ १ ॥ एताश्च विष्कम्भतः संख्यातान्यायामतः परिक्षेपतश्चासंख्यातानि योजनसहस्राणि । महत्त्वं

चासा भगवत्यामेवमुपवर्ण्यते, यथाह—यो देवो महर्द्धिक इत्यादि प्राग्वत्, यावदर्द्धमासेन "अत्थेगइयं कण्हराइं वीईवएज्जा, अत्थेगइयं कण्हराइं नो वीईवइज्जा" इति, एतासां चाष्टानां कृष्णराजीनामष्टस्ववकाशान्तरेषु यथाक्रममर्चि[१]रर्चिमालि[२]वैरोचन[३]प्रभङ्कर[४]चन्द्राभ[५]सूर्याभ[६]शुक्राभ[७]सुप्रतिष्ठाभ[८]नामान्यष्टौ लोकान्तिकविमानानि भवन्ति । तत्र लोकस्य—ब्रह्मलोकस्यान्ते—समीपे भवानि लोकान्तिकानि, तानि च तानि विमानानि च, लोकान्तिका वा देवास्तेषां विमानानि लोकान्तिकविमानानि, तद्यथा—अभ्यन्तरोत्तरपूर्वयोरन्तरेऽर्चिः, एवं पूर्वयोर्द्वितीयं, अभ्यन्तरपूर्वदक्षिणयोस्तृतीयं, दक्षिणयोश्चतुर्थं, अभ्यन्तरदक्षिणपश्चिमयोः पञ्चमं, पश्चिमयोः षष्ठं, अभ्यन्तरपश्चिमोत्तरयोः सप्तमं, उत्तरयोरष्टमं, सर्वकृष्णराजीमध्यभागे तु नवमं रिष्टविमानम्, एतच्च विमानप्रस्तावादभिधीयते । एषु च विमानेषु यथाक्रमं सारस्वतादयो देवा वसन्ति, यथा—सारस्सयमाइच्चा, वण्ही वरुणा य गद्दतोया य । तुसिया अव्वाबाहा, अग्गिच्चा चेव रिट्ठाय ॥ १ ॥ संज्ञान्तरतो मरुतोऽप्यभिधीयन्ते, रिष्टाश्चेति तात्स्थ्यात्तद्व्यपदेश इति रिष्टविमानाधारा रिष्टाः, एते च सारस्वतादयो लोकान्तिकसुराः प्रव्रज्यासमयात् संवत्सरेणार्वागेव स्वयंसम्बुद्धमपि भगवन्तं जिनवरेन्द्रं कल्प इति कृत्वा 'भगवन्! सर्वजगज्जीवहितं तीर्थं प्रवर्तयस्वेति' बोधयन्ति । तथा चोक्तम्—"एए देवनिकाया, भगवं बोहिंति जिणवरिंदं तु । सव्वजगज्जीवहिअं, भगवं! तित्थं पवत्तेहि ॥ १ ॥" इह च सारस्वतादित्ययोः समुदितयोः सप्त देवाः सप्त च देवशतानि परिवारः, एवं वह्निवरुणयोश्चतुर्दश देवाश्चतुर्दश च देवस-

हस्राः, गर्दतोयतुषितयोः सप्त देवाः सप्त च देवसहस्राः, शेषेषु त्वव्याबाधाग्नेयरिष्टेषु नव देवा नव च देवशतानीति । परिवारसंख्याया चाग—पढमजुयलंमि सत्त उ, सयाणि बीयंमि चउदस सहस्सा । तइए सत्त सहस्सा, नव चेव सयाणि सेसेसु ॥ १ ॥ स्थितिश्च लोकान्तिकविमानेषु देवानामष्टौ सागरोपमाणि, तथैतेभ्यो विमानेभ्योऽसंख्यातयोजनसहस्रैरलोक इत्यलं प्रसङ्गेन ॥ ११ ॥ साम्प्रतं दशानामपि वैमानिकेन्द्राणां सामानिकानात्मरक्षांश्चाह—

चुलसी असीइ बावत्तरि सत्तरि सट्ठि पन्न चत्ताला ।
तुल्लसुर तीस वीसा, दस सहस्सा आयरक्ख चउगुणिआ ॥ ७८ ॥

व्याख्या—पूर्वार्द्धसम्बोत्तरार्द्धेयं गाथा गीतिसंज्ञा, 'तुल्लसुर'त्ति सामानिका देवाः सौधर्मेन्द्रस्य चतुरशीतिसहस्राः ८४०००, एवं ईशानेन्द्रस्याशीतिः ८००००, सनत्कुमारेन्द्रस्य द्विसप्ततिः ७२०००, माहेन्द्रस्य सप्ततिः ७००००, ब्रह्मलोकेन्द्रस्य षष्टिः ६००००, लान्तकेन्द्रस्य पञ्चाशत् ५००००, महाशुक्रेन्द्रस्य चत्वारिंशत् ४००००, सहस्रारेन्द्रस्य त्रिंशत् ३००००, आनतप्राणतेन्द्रस्य विंशतिः २००००, आरणाच्युतेन्द्रस्य दश १०००० । सर्वेषामपि चात्मरक्षाश्चतुर्गुणिकाः (ताः)—सामानिकेभ्यश्चतुर्गुणा इत्यर्थः । यथा सौधर्मेन्द्रस्य तिस्रो लक्षाः षट्त्रिंशत्सहस्राः ३३६००० इत्यादि । अपरश्चात्र विशेषो द्वादशस्वपि सौधर्मादिष्वच्युतान्तेषु कल्पेषु देवाः क्रमेण मृग-महिष-वराह-सिंह-छगल-

दर्दुर-हय-गजपति-भुजग-खड्ग-वृषभ-विडिम-रूपप्रकटितचिह्नमुकुटाः, तथा च प्रज्ञापना—"ते णं मिगमहिसवराहसीहछगलदद्दुरहयगयवइभुअगखग्गउसभंकविडिमपायडिअचिन्धमउडा" इति । अत्र खड्गो गण्डकनामा आटव्यश्चतुष्पदविशेषः । यदाह शाश्वतः—'खड्गो गण्डकशृङ्गासिबुद्धभेदेषु गण्डकः' इति । विडिमस्तु मृगविशेषो लक्ष्यते, तथा च देशीशास्त्रम्—"विडिमो सिसुमिअगंडेसु" । औपपातिकोपाङ्गे त्वेवं चिह्नविभागो दृश्यते—सोहम्मईसाणसणंकुमारमाहिंदबंभलंतगमहासुक्कसहस्सारआणयपाणयआरणच्चुअवइ पालयपुप्फयसोमणससिरिवच्छनंदिआवत्तकामगमपीइगममणोरमविमलसव्वओभद्दनामधेज्जेहिं विमाणेहिं ओइन्ना वंदगा जिणिंदं मिगमहिसवराहसीहछगलदद्दुरहयगयवइभुअगखग्गउसभंकविडिमपायडिअचिंधमउडा" इति । अत्र मृगादयोऽङ्का—लाञ्छनानि विटपेषु—विस्तारेषु एषां मुकुटानां तानि प्रकटितचिह्नानि रत्नादिदीप्त्या प्रकाशितमृगादिलाञ्छनानि मुकुटानि येषां ते तथा इति वृत्तिः । तत्त्वं तु सर्वविदो विदन्ति ॥ १८ ॥ अधुना विमानानामाश्रयमाह—

दुसु तिसु तिसु कप्पेसुं, घणुदहि घणवाय तदुभयं च कमा ।
सुरभवणपइट्ठाणं, आगासपइट्ठिआ उवरिं ॥ ७९ ॥

व्याख्या—द्वयोः—सौधर्मेशानकल्पयोः, त्रिषु—सनत्कुमारमाहेन्द्रब्रह्मलोककल्पेषु, तथा त्रिषु—लान्तकशुक्र-

सहस्रारकल्पेषु, सुरभवनानां—विमानानां, प्रतिष्ठन्ति यस्मिन्निति प्रतिष्ठानम्—आश्रयः, क्रमात्—यथासंख्यं घनोदधिः घनवातः तदुभयं चेति । तत्र घनोदधिः स्त्यानीभूतो जलराशिः, स च तथा जगत्स्वाभाव्यात् न स्पन्दते, नापि तत्राश्रितानि विमानानि विलयमुपयान्ति । घनवातोऽत्यन्तनिचितोऽपरिस्पन्दो वातराशिः । तदुभयं घनोदधिघनवातद्वयं, एतेषु त्रिषु विमानानि स्थितानीत्यर्थः । तत ऊर्ध्वमानतादिविमानान्याकाशप्रतिष्ठितानि ॥ ७९ ॥

साम्प्रतं विमानाधारभूमिकानां बाहल्यं भूमिकात उपरि विमानानामुच्चत्वं च गाथात्रयेणाह—

सत्तावीस सयाइं, पुढवीपिंडो विमाणमुच्चत्तं ।
पंच सया कप्पदुगे, पढमे तत्तो य एक्केक्कं ॥ ८० ॥
हायइ पुढवीसु सयं, वड्ढइ भवणेसु दुदुदुकप्पेसु ।
चउगे नवगे पणगे, तहेव जाऽणुत्तरेसु भवे ॥ ८१ ॥
इगवीससया पुढवी, विमाणमेक्कारसेव य सयाइं ।
बत्तीस जोअणसया, मिलिआ सव्वत्थ नायव्वा ॥ ८२ ॥

व्याख्या—प्रथमे सौधर्मेशानकल्पद्विके विमानाधारभूमिकारूपपृथ्वीनां पिण्डस्थूलत्वं सप्तविंशतिः प्रमाणा

कुलनिष्पन्नानि योजनशतानि २७००, तासां च पृथ्वीनामुपरि विमानानामुच्चत्वं पञ्च योजनशतानि ५००, ततश्चोर्ध्वमेकैकं योजनशतं पृथ्वीपिण्डेषु हीयते, तदेव च भवनेषु–विमानेषु वर्द्धते । केत्याह—'दुदुदु इत्यादि' द्वयोः-सनत्कुमारमाहेन्द्रयोः पृथ्वीपिण्डो योजनानां षड्विंशतिः शतानि, विमानोच्चत्वं षट् शतानि, ब्रह्मलोकलान्तकयोः पृथ्वीपिण्डः पञ्चविंशतिः शतानि, विमानोच्चत्वं सप्त शतानि, शुक्रसहस्रारयोः पृथ्वीपिण्डश्चतुर्विंशतिः शतानि, विमानोच्चत्वमष्टौ शतानि, आनतप्राणतारणाच्युतकल्पेषु पृथ्वीपिण्डस्त्रयोविंशतिः शतानि, विमानोच्चत्वं नव शतानि, नवस्वपि ग्रैवेयकेषु पृथ्वीपिण्डो द्वाविंशतिः शतानि, विमानोच्चत्वं दश शतानि, यावदनुत्तरेषु पृथ्वीपिण्डो भवेदेकविंशतिः शतानि, विमानानि तु पञ्चाप्युच्चत्वेनैकादशैव शतानीति । एवं च सर्वेष्वपि सौधर्म्मादिष्वनुत्तरान्तेषु एकैकस्मिन्निजभूमिकान्विते विमाने पृथ्वीबाहल्यं विमानोच्चत्वं च यदा मील्यते तदा द्वात्रिंशद्योजनशतानि ज्ञातव्यानीति ॥ ८०-८१-८२ ॥ सम्प्रति सौधर्म्मादिषु विमानानां वर्णविभागमाह—

पणचउतिदुवण्ण विमाण सधय दुसु दुसु अ जा सहस्सारो ।
उवरि सिअभवणवंतरजोइसिआणं विविहवण्णा ॥ ८३ ॥

व्याख्या—पञ्चचतुस्त्रिद्विवर्णानि विमानानि भवन्ति यथासंख्यं द्वयोर्द्वयोः कल्पयोर्यावत् सहस्रारः, तथाहि—

[illegible]

सौधर्म्मैशानयोः शुक्लपीतरक्तनीलकृष्णवर्णानि विमानानि, सनत्कुमारमाहेन्द्रयोः कृष्णं विना चतुर्वर्णानि, ब्रह्म-लोकलान्तकयोः शुक्लपीतरक्तानि, शुक्रसहस्रारयोः शुक्लपीतानि, तत ऊर्ध्वं आनतादिष्वनुत्तरान्तेषु विमानानि सित-वर्णान्येव । सर्वाण्यपि चैतानि विमानानि भवनपत्यादिसम्बन्धीनि च भवननगरविमानानि 'समयत्ति' उपलक्ष-णत्वात् ध्वजपताकासहस्राकुलानि । तथा भवनपतिव्यन्तरज्योतिष्काणां भवननगरविमानानि विविधवर्णानि, पञ्च-वर्णानीत्यर्थः । प्रस्तावाच्च भवनादीनां वर्णोऽभिहित इति ॥ ८३ ॥ साम्प्रतं सौधर्मादिविमानानां विष्कम्भाया-माभ्यन्तरबाह्यपरिधिनिरूपणायाह—

रविणो उदयत्थंतर, चउणवइसहस्स पणसयछवीसा ।
बायाल सट्ठिभागा, कक्कडसंकंतिदिअहंमि ॥ ८४ ॥
एयम्मि पुणो गुणिए, तिपंचसगनवहि होइ कममाणं ।
तिगुणम्मी दो लक्खा, तेसीइसहस्स पंच सया ॥ ८५॥
असिई छ सट्ठिभागा, जोअण चउलक्ख बिसत्तरि सहस्सा ।

छच्च सया तेत्तीसा, तीस कला पंचगुणिअंमि ॥ ८६ ॥
सत्तगुणे छल्लक्खा, इगसट्ठिसहस्स छसय छासीआ ।
चउपन्न कला तह नवगुणम्मि अडलक्ख सड्ढा उ ॥ ८७ ॥
सत्त सया चत्ताला, अट्ठारकला य इअ कमा चउरो ।
चंडा चवला जयणा, वेगा य तहा गई चउरो ॥ ८८ ॥
एत्थ य गइं चउत्थिं, जवणयरिं नाम केइ मन्नंति ।
एहिँ कमेहिमिमाहिं, गइहिं चउरो सुरा कमसो ॥ ८९ ॥
विक्खम्भं आयामं, परिहिं अब्भितरं च बाहिरियं ।
जुगवं मिणंति छम्मास, जाव न तहावि ते पारं ॥ ९० ॥
पावंति विमाणाणं, केसिंपि हु अहव तिगुणिआईए ।
कमचउगे पत्तेअं, चंडाइगईउ जोइज्जा ॥ ९१ ॥

तिगुणेण कप्पचउगे, पंचगुणेणं तु अट्ठसु मिणिज्जा।
गेवेज्जे सत्तगुणेण नवगुणेणुत्तरचउक्के ॥ ९२ ॥

गाथानवकमपि प्रकटार्थं, तथापि किञ्चिन्निरूप्यते—इह किल कर्कटसंक्रान्तिदिने सर्वाभ्यन्तरे मण्डले उदय-समये सूर्यं सप्तचत्वारिंशत्सहस्राणि द्वे शते त्रिषष्ट्यधिके प्रमाणाङ्गुलयोजनानामेकविंशतिश्च षष्टिभागा योजनस्य ४७२६३ । $\frac{२१}{६०}$ । एतावति क्षेत्रे स्थितं नराः प्रेक्षन्ते, यदुक्तम्—"सीआलीस सहस्सा, दो य सया जोअणाण तेवट्ठा। इगवीस सट्ठिभागा, कक्कडमाइंमि पिच्छ नरा ॥ १ ॥" अस्तमयन्तमप्येतावत्येव स्थितमिति भवति रवेरुदयास्तयोर-न्तरक्षेत्रमानं योजनानां चतुर्णवतिः सहस्राणि पञ्च शतानि षड्विंशत्यधिकद्विचत्वारिंशच्च षष्टिभागा योजनस्य, ९४५२६ । $\frac{४२}{६०}$ । एतस्मिंश्च त्रिपञ्चसप्तनवभिर्गुणिते यदागच्छति तत्क्रमाणां—पादविस्ताररूपाणां मानं—प्रमाणं भवति। क्रमेणागतस्थापना त्रिगुणे २८३५८०। $\frac{६}{६०}$ । पञ्चगुणे ४७२६३३। कला ३० (भागाः)। सप्तगुणे ६६१६८६। कलाः ।५४। नवगुणे ८५०७४०।कला १८। इत्यमुना प्रकारेण क्षेत्रतोऽभिहितप्रमाणाश्चत्वारः क्रमा भवन्ति। तथा—चण्डा चपला जवना वेगा चेति यथोत्तरं शीघ्रशीघ्रतराश्चतस्रो गतयो भवन्ति। अत्र च गतिचतुष्के केचिच्चतुर्थीं वेगाभि-धानां गतीं नाम्ना जवनतरीं मन्यन्ते। तत एभिश्चतुर्भिः क्रमैरिमाभिश्चतसृभिर्गतिभिश्चत्वारः सुराः क्रमशो यथा-

संख्यं विष्कम्भायामाभ्यन्तरबाह्यपरिधीन् युगपन्मिन्वन्ति । तथाहि—त्रिगुणनागतेन क्रमेण चण्डया गत्या विस्तारं, पञ्चगुणनागतेन क्रमेण चपलया गत्या दैर्घ्यं, सप्तगुणनागतेन क्रमेण जवनया गत्या मध्यपरिधिं, नवगुणनागतेन क्रमेण वेगया गत्या बाह्यपरिधिं, यथाक्रमं चत्वारो देवाः षण्मासान् यावदेककालं मिन्वन्ति, तथापि केषाञ्चिद्विमानानां पारं—पर्यन्तं न प्राप्नुवन्ति । जीवाभिगमे तु—चण्डादि विष्कम्भादि चाविवक्षित्वा (क्ष्य) सामान्येन मानं चिन्तितं, यथा—कश्चिद्देवस्त्रिगुणनागतेन क्रमेण षड्भिर्मासैः, स्वस्तिकस्वस्तिकावर्त्तस्वस्तिकप्रभस्वस्तिककान्तस्वस्तिकवर्णस्वस्तिकलेश्यस्वस्तिकध्वजस्वस्तिकसितस्वस्तिककूटस्वस्तिकशिष्टस्वस्तिकोत्तरावतंसकानां विमानानां मध्यात् किञ्चिद् व्यतिव्रजेत्, किञ्चिन्नेति । एवं पञ्चगुणनागतेनार्चिरर्चिरावर्त्तआर्चिःप्रभआर्चिःकान्तआर्चिर्वर्णआर्चिर्लेश्यआर्चिर्ध्वजआर्चिःसितआर्चिःकूटआर्चिःशिष्टआर्चिरुत्तरावतंसकानां; सप्तगुणनागतेन कामकामावर्त्तकामप्रभकामकान्तकामवर्णकामलेश्यकामध्वजकामसितकामकूटकामशिष्टकामोत्तरावतंसकानां, नवगुणनागतेन विजयवैजयन्तजयन्तापराजितानां, तथा च तद्ग्रन्थः—अत्थि णं भंते विमाणाइं! सोत्थिआइं जाव सोत्थोत्तरवडिंसयाइं, हंता अत्थि, तेणं भंते! विमाणा के महालया पन्नत्ता? गोअमा! जावइअं च णं सूरिए उदेइ जावइअं च णं सूरिए अत्थमेइ एवइआइं तिन्नि ओवासंतराइं अत्थेगइअस्स देवस्स एगे विक्कमे सिआ, से णं देवे ताए उक्किट्ठाए तुरिआए जाव दिव्वाए देवगईए वीईवयमाणे जाव एक्काहं वा दुआहं वा उक्कोसेणं छम्मासे वीइवएज्जा, अत्थेगइअं

विमाणं वीईवएज्जा, अत्थेगईअं नो वीईवएज्जा इत्यादि" । अथवा प्रकारान्तरेण सौधर्मादिष्वनुत्तरान्तेषु केषाञ्चिद्विमानानां विष्कम्भादिपरिज्ञानाय त्रिगुणनादिके प्राग्रुक्तस्वरूपे क्रमचतुष्के प्रत्येकमेकैकस्मिन् चतस्रोऽपि चण्डादिगतीर्योजयेत्, ततस्त्रिगुणनागतपरिमाणेन क्रमेण सौधर्मेशानसनत्कुमारमाहेन्द्रेषु चतुर्षु कल्पेषु केषाञ्चिद्विमानानां चण्डया गत्या विष्कम्भं, चपलया आयामं, जवनयाऽभ्यन्तरपरिधिं, वेगया बाह्यपरिधिं कश्चिद्देवो मिनुयात् । तथा पञ्चगुणनागतप्रमाणेन चण्डादिगतिभेदभिन्नेन द्वितीयेन क्रमेण ब्रह्मलोकादिष्वष्टसु कल्पेषु केषाञ्चिद्विमानानां विष्कम्भादि मिनुयात् । एवं नवसु ग्रैवेयकेषु सप्तगुणनागतेन तृतीयक्रमेण, विजयादिषु चतुर्षु अनुत्तरविमानेषु नवगुणनागतेन चतुर्थक्रमेण विष्कम्भादि मिनुयात्, न च षड्भिरपि मासैः पारं प्राप्नुयादिति । ननु यद्येतावन्मात्रेणापि क्रमेण चण्डादिभिरपि गतिभिः षड्भिरपि मासैः सुराः केषाञ्चिद्विमानानां पारं न प्राप्नुवन्ति, तत्कथमिह जिनादीनां गर्भजन्मव्रतज्ञानमोक्षकल्याणकादिषु महिमानिमित्तं तत्रैव दिने तस्मिन्नेव समये समागच्छन्ति, सौधर्मादिकल्पेभ्यो मनुष्यक्षेत्रस्यात्यन्तदूरत्वात्, अत्रोच्यते, पल्योपमादिप्रमाणवत् कल्पितमेवेदं क्रमगतिप्रमाणं, देवास्तु तथाभवस्वाभाव्यादचिन्त्यसामर्थ्यतोऽत्यन्तशीघ्रा एवेति ॥ ८४—९२ ॥ इत्थं सामान्येन सौधर्मादिषु विमानानां प्रमाणमभिधाय कंचिद्विशेषतोऽप्याह—

पढमपयरंमि पढमे, कप्पे उडुनाम इंदयविमाणं ।
पणयाललक्खजोअण, लक्खं सव्वुवरि सव्वट्ठं ॥ ९३ ॥

सुगमा । इह च प्रस्तावे केचिन्मनुष्यक्षेत्रादूर्ध्वं कियति सौधर्मादय इत्यूर्ध्वलोकविभागप्रदर्शनाय पूर्वसंग्रहण्यां प्रक्षेपगाथां पठन्ति "सोहम्मंमि दिवड्ढा, अड्ढाइज्जा य रज्जु माहिंदे । पंचेव सहस्सारे, छ अच्चुए सत्त लोगंते ॥१॥" एषा च मतान्तरगाथेति ज्ञापनार्थं चतुर्दशरज्ज्वात्मकस्यापि लोकस्य विभागमाह—

अहभागा सग पुढविसु, रज्जू एक्केक्क तहय सोहम्मे ।
माहिंद लंन्त सहसारच्चुअगेविज्ज लोगंते ॥ ९४ ॥

व्याख्या—लोकस्य सर्वाधस्तनभागादारभ्य सप्तसु पृथ्वीषु तथा सौधर्मादिषु च सप्तसु स्थानेषु क्रमादेकैका रज्जुर्भवति । तथाहि—अयमूर्ध्वाधश्चतुर्दशरज्ज्वात्मको लोकश्चतुर्दशभागीक्रियते, तत्र सर्वाधस्तनाल्लोकान्तादारभ्य सर्वमवकाशान्तरं तमस्तमप्रभाया उपरितलं च यावदेतावान् रज्जुप्रमाणः प्रथमो भागः, तत ऊर्ध्वं पुनरवकाशान्तरं तमःप्रभाया उपरितलं च यावत् द्वितीयः; एवं यावत् शर्कराप्रभाया उपरितलादारभ्य रत्नप्रभाया उपरितलं च यावत्

सप्तमः, तत ऊर्ध्वं तु रत्नप्रभाया उपरितलादारभ्य सौधर्म्मविमानान्ते, ततोऽपि माहेन्द्रविमानान्ते एवं लान्तकान्ते सहस्रारान्ते अच्युतान्ते ग्रैवेयकान्ते लोकान्ते च क्रमादेकैकरज्जुप्रमाणाः सप्त भागाः, तथा चावश्यकनिर्युक्तौ सामायिकस्पर्शनाद्वारे चतुर्दशपूर्वधारी भगवान् भद्रबाहुः—"सम्मत्तचरणसहिआ, सव्वं लोगं फुसे निरवसेसं। सत्त य चोद्दसभागे, पंच य सुअदेसविरईए ॥१॥" अस्या व्याख्या—सम्यक्त्वचारित्रयुक्ताः प्राणिन उत्कर्षतः सर्वं लोकं स्पृशन्ति, किं व्याप्तिमात्रेण? नेत्याह—निरवशेषं-प्रतिप्रदेशव्याप्त्या समस्तमप्यसङ्ख्यातप्रदेशात्मकं, एते च केवलिसमुद्घातावस्थाः केवलिन एव बोद्धव्याः, जघन्यतस्त्वसङ्ख्येयं भागं स्पृशन्तीति स्वयं द्रष्टव्यम्। एकजीवस्य लोकासङ्ख्येयभागेऽवस्थानात्, तथा 'सत्त य चोद्दसेत्यादि' श्रुतसामायिकयुक्ताः सप्त चतुर्दशभागान् स्पृशन्ति, देशविरतियुक्तास्तु पञ्च भागान् स्पृशन्ति, इयमत्रभावना—सम्यक्त्वचरणसहितः प्रकृष्टतपस्वी श्रुतज्ञानोपेतो यदाऽनुत्तरेष्विलिकागत्या समुत्पद्यते तदा लोकस्य सप्त चतुर्दशभागान् स्पृशति। 'सत्त ये'त्यत्र चशब्दस्यानुक्तसमुच्चयार्थत्वादधः पञ्चभागान् स्पृशतीति प्रतिपत्तव्यं, तथाहि—सम्यग्दृष्टिः श्रुतज्ञानी पूर्वं नरकेषु बद्धायुष्कः षष्ठपृथिव्यामिलिकागत्या समुत्पद्यमानः पञ्चैव भागान् स्पृशतीति, देशविरतस्त्विलिकागत्याऽच्युते उत्पद्यमानः पञ्च भागान् स्पृशति, अधस्त्वसौ घण्टालालान्यायेनापि तं परिणाममपरित्यज्य नोत्पद्यत इत्यधोभागेषु न चिन्तितः। यच्चूर्णिः—"देसविरओ हेट्ठा न उववज्जइ, तेण पंच उवरिं

अच्चुअं जावत्ति भणिअमिति"। एनामेव च भद्रबाहुस्वामिगाथां व्याख्यानयन् चूर्णिकारोऽपि सकलस्यापि लोकस्य विभागमित्थमेव दर्शयति। यथा—"लोगो चउदसभागे कीरइ, हेट्ठा उवरिंपि सत्त सत्त चेव, कहं? रयणप्पभाओ आरब्भ जाव से ओवासन्तरं, एयं सव्वं पढमो भागो, एवं सेसासुवि, एए अहे सत्त भागा। उवरिं इमो भागविही—रयणप्पभाए उवरिमतलाओ आरद्धं जाव सोहम्मो कप्पो एस पढमो भागो, सोहम्मगाणं विमाणाणं उवरिं आरद्धं जाव सणंकुमारमाहिंदा एस विइओ, एवं तइओ जाव बम्भलोगलन्तया, चउत्थो जाव सुक्कसहस्सारा, पंचमो आणयाईआ चउरो कप्पा, छट्ठो गेवेज्जा, सेसो जाव लोगंतो सत्तमोत्ति"। अत्र हि देशविरत इलिकागत्याऽच्युते उत्पद्यमानो लोकस्य पञ्च चतुर्दशभागान् स्पृशतीति वदताऽच्युते पञ्च रज्जवोऽभिहिताः, अतोऽच्युते षट् रज्जव इति मतान्तरमेवेति श्रुतविदः, तत्त्वं पुनः केवलिनो विदन्तीति। तदेवमुक्तः सकलस्यापि लोकस्य ऊर्ध्वाधोविभागः। तिर्यक् पुनस्तमेवं वृद्धाः प्रज्ञापयन्ति—इह लोकाकाशप्रदेशा उपरितनाधस्तनप्रदेशरहिततया विवक्षिता मण्डकाकारतया व्यवस्थिताः प्रतरा इत्युच्यन्ते। तओ तिरिअलोगस्स उड्ढाहो अट्ठारसजोअणसइअस्स बहुमज्झे। एत्थ असंखेज्जंगुलभागमेत्ता लोगागासपयरा अलोगेणं संवट्टिआ सव्वखुड्डा पतरगा खुड्डागपयरत्ति भण्णंति। ते य सव्वओ रज्जुपमाणा, तेसिं बहुमज्झे दो खुड्डागपयरत्ति तेसिंपि बहुमज्झे जम्बुद्दीवे रयणप्पहपुढविबहुसमभूमिभागे मन्दरस्स बहुमज्झे एत्थ अट्ठप्पएसो रुअगो, जतो दिसिविदिसिविभागो पवत्तो, एयं तिरिअलोअमज्झं। एआओ

विमाणं वीईवएज्जा. अत्थेगईअं नो वीईवएज्जा इत्यादि" । अथवा प्रकारान्तरेण सौधर्मादिष्वनुत्तरान्तेषु केषाञ्चि-
तिरिअलोअमज्झाओ रज्जुप्पमाणखुड्डागपयरेहिंतो उवरिं तिरिअं असंखेज्जअसंखेज्जंगुलभागवुड्ढी उवरिमुत्तोऽवि अंगुलासंखेज्जयभागारोहो चेव, एवं तिरिअमुवरिं च अङ्गुलासंखेयभागवुड्ढीए ताव लोगवुड्ढी नेअव्वा जाव उड्ढलोअमज्झं; तत्र पञ्च रज्जवः, तओ पुणो तेणेव कमेण संवट्टो कायव्वो, जा उवरिमलोगन्तु रज्जुप्पमाणो, तओ य उड्ढलोअमज्झाओ उवरि हेट्ठा य कमेण खुड्डागपयरा भाणिअव्वा, जाव रज्जुप्पमाणा खुड्डागपयरन्ति । तिरियलोगमज्झरज्जुप्पमाणखुड्डागपयरेहिंतोवि हिट्ठा अंगुलअसंखेज्जइभागवुड्ढी तिरिअं अहोवगाहेणवि अङ्गुलस्स असंखेयभागो चेव, एवमहोलोगो वड्ढेअव्वो जाव अहोलोगंतो सत्तरज्जुओ, सत्तरज्जुप्पयरेहिंतोवि उवरिं कमेण खुड्डागपयरा भाणिअव्वा, जाव तिरिअलोगमज्झं रज्जुप्पमाणा खुड्डागपयरत्ति," एवं च लोकोऽयं वैशाखस्थानस्थपुरुष इव कटिस्थकरयुग्म इति सिद्धं । स्थापना । इह चोपरिमुखादधोमुखाच्चाङ्गुलासंख्येयभागात्तिर्यगङ्गुलासंख्येयभागो लघुर्द्रष्टव्यः, तथोच्छ्रयतो मेरुमध्यगतरुचकापेक्षयाऽधस्तात् सप्तरज्जूनां किञ्चिदाधिक्यमुपरि च किञ्चिन्न्यूनत्वं, तिर्यगप्यधोलोकान्ते सप्तरज्जूनां देशोनत्वं स्तोकत्वान्न विवक्षितम् ॥ ९४ ॥ इदानीं सुराणां भवनद्वारमुपसंहरन्नवगाहनाद्वारमभिसम्बन्धयति ।

सुरेसु भवणदारं सम्मत्तं, इणिंह ओगाहणादारं भण्णइ ।

स्पष्टं, तदेवाह—

भवण वणजोइसोहम्मी–साणे सत्तहत्थ तणुमाणं ।
दुदुदुचउक्के गेवेज्जणुत्तरे हाणि एक्किक्के ॥ ९५ ॥

व्याख्या—भवनपतिवनचरज्योतिष्कसौधर्म्मेशानेषु देवानामुत्सेधाङ्गुलेन सप्त हस्ता उत्कृष्टं तनोः–शरीरस्य मानं, शेषे सनत्कुमारमाहेन्द्रद्विके, ब्रह्मलोकलान्तकद्विके, शुक्रसहस्रारद्विके, आनतप्राणतारणाच्युतचतुष्के, ग्रैवेयकनवके, अनुत्तरपञ्चके, एकैकहस्तविषया हानिर्वक्तव्या । ततो यथाक्रममेतेषु षट् पञ्च चत्वारस्त्रयो द्वावेकश्च हस्तः शरीरमानम् ॥ ९५ ॥ इत्थं सामान्येन सुराणां शरीरमानमुक्तं, विशेषतस्तु सागरोपमवृद्ध्यनुरोधतः सनत्कुमारादिष्वनुत्तरान्तेषु गाथात्रयेणाह—

कप्पदुगदुदुदुचउगे, नवगे पणगे अ जिट्ठठिइ अंयरा ।
दो सत्त चउदठारस, बावीसिगतीस तेत्तीसा ॥ ९६ ॥
विवरे ताणिक्कूणे, एक्कारसगाउ पाडिए सेसा ।

हत्थेक्कारसभागा, अयरे अयरे समहिअम्मि ॥ ९७ ॥

चय पुव्वसरीराओ, कमेण एगुत्तराइ वुड्ढीए ।

एवं ठिईविसेसा, सणंकुमाराइ तणुमाणं ॥ ९८ ॥

व्याख्या—कल्पद्विके-सौधर्म्मेशानरूपे, तत उपरि द्वयोर्द्वयोर्द्वयोः चतुष्के नवके पञ्चके च, क्रमेण ज्येष्ठा स्थितिर्द्वे सप्त चतुर्दश अष्टादश द्वाविंशतिः एकत्रिंशत् त्रयस्त्रिंशत् अतराणि—सागरोपमाणि । अत्रेशानमाहेन्द्रयोः साधिकत्वं देहमानेऽनुपयोगित्वान्न विवक्षितं, इयं च स्थितिः प्रागुक्तापि करणानुरोधादित्थमत्रोपदर्शिता, ततस्तासां सौधर्म्म-द्विकादिस्थानसप्तकगतानां सागरोपमद्विकादीनामुत्कृष्टानां स्थितीनां विवरो-विवरणं विश्लेषो, बृहत्याः स्थितेः सका-शादल्पायां पातितायां यदवशिष्यत इत्यर्थः, तस्मिन्नेकोने—एकरूपहीने एकादशभ्यो हस्तगतेभ्यो भागेभ्यः पाति-ते ये शेषा हस्तैकादशभागास्तानेकस्मिन्नेकस्मिन् सागरोपमे समधिके सति पूर्वपूर्वशरीरप्रमाणात्क्रमेण एकोत्तरया वृद्ध्या एकैकेन एकादशभागेन परिवृद्धान् त्यज, सूत्रे तु प्रथमा द्वितीयार्थे प्राकृतत्वात्, तत एवमुक्तप्रकारेण स्थितिविशेषात्—सागरोपमवृद्धिरूपात् सनत्कुमारादिषु देवानां शरीरप्रमाणं भवति, तथाहि—सौधर्म्मेशानयोरु-त्कृष्टा स्थितिर्द्वे अतरे, सनत्कुमारमाहेन्द्रयोः सप्त, तेभ्यो द्वे अपनीयेते, स्थिताः पञ्च. ते एकोनाः क्रियन्ते, जाताश्च-

त्वारः, ते चैकहस्तादेकादशभागीकृतात्पात्यन्ते, स्थिताः ससैकादशभागाः, ते सौधर्म्मेशानगतशरीरमानात् सप्तहस्तरूपात्त्यज्यन्ते, जातं सनत्कुमारे माहेन्द्रे च त्रिसागरोपमायुषां सुराणां शरीरमानं षट् हस्ताश्चत्वारश्चैकादशभागाः, एवमेकैकसागरोपमवृद्धावेकैकाधिकभागपातने चतुःसागरोपमायुषां षट् हस्तास्त्रयो भागाः, पञ्चसागरोपमायुषां षट् हस्ता द्वौ भागौ, षट्सागरोपमायुषां षट् हस्ता एको भागः, सप्तसागरोपमायुषां पूर्णाः षट् हस्ताः। स्थापना। उक्तं च–"दो सागरोवमाइं, पुण्णाइं जाव जेसि ठिइ होइ। सत्तरयणीउ तेसिं, देहपमाणं सुरवराणं ॥१॥ एक्कारसभागेहिं, रयणी काऊण देहपरिमाणं। वोच्छामि ठिइवसेणं, सणंकुमाराइदेवाणं ॥ २ ॥ अयरतिगं ठिइ जेसिं, सणंकुमारे तहेव माहिंदे। रयणीछक्कं तेसिं, भागचउक्काहियं देहो ॥ ३ ॥ तत्तो अयरे अयरे, भागे एक्केक्कओ पडइ जाव। सागरसत्तठिईणं, रयणीछक्कं तणुपमाणं ॥ ४ ॥" एवं ब्रह्मलोकलान्तकादिष्वपि करणभावना कार्या, केवलं ब्रह्मलोकलान्तकयोः स्थापना। उक्तं च–"बंभंमि लंतएवि अ, सायर अट्ठेव जेसि ठिइ होइ। रयणीओ पंच भागा, छच्चेव य तेसि तणुमाणं ॥ १ ॥ तत्तो अयरे अयरे, भागो एक्केक्कओ पडइ जाव। चउदहअयरठिईणं, रयणीओ पंच तणुमाणं ॥२॥" अत्र 'बंभंमि लंतएविअ' इति प्रागुक्तकरणानुरोधतोऽभिहितं यावता अष्टौ सागरोपमाणि ब्रह्मलोके एव बोद्धव्यानि न लान्तके। शुक्रसहस्रारयोः स्थापना। उक्तं च–"सुक्कसहस्सारेसुं, पनरससागरठिईण देवाणं। रयणिचउक्कं भागा, तिन्नेव सरीरपरिमाणं ॥ १ ॥ तत्तो अयरे अयरे, भागो एक्केक्कओ पडइ

तिरिअलोअमज्झाओ रज्जुप्पमाणखुड्डागपयरेहिंतो उवरिं तिरिअं असंखेज्जअसंखेज्जंगुलभागवुड्ढी उवरिल्लुचोऽवि
अंगुलासंखेज्जभागागेहो तेन ...



जाव । रयणिचउक्कं देहो, अट्ठारससागरठिईणं ॥ २ ॥ आनतप्राणतारणाच्युतचतुष्के स्थापना । उक्तं च–"आण-यपमुहचउक्के, उणवीसायरठिईण देवाणं । तणुमाणं हत्थतिगं, भागतिअं समहिअं होइ ॥ १ ॥ तत्तो अयरे अयरे, भागो एक्केक्कओ पडइ जाव । बावीसयरठिईणं, तिहत्थमाणो हवइ देहो ॥२॥" ग्रैवेयकनवके स्थापना । उक्तं च–"गेवेज्जेसु जेसिं, तेवीसं सायरा ठिई तेसिं । हत्थदुगं तणुमाणं, भागा अट्ठेव देवाणं ॥ १ ॥ तत्तो अयरे अयरे, भागो इक्केक्कओ पडइ जाव । इगतीससागराऊ, नवमे दोहत्थया देवा ॥ २ ॥" अनुत्तरपञ्चके स्थापना । उक्तं च–"बत्तीसयरठिईणं, विजयाइसु एक्कभागजुअरयणी । अह एक्कच्चिअ रयणी, सव्वट्ठे देवतणुमाणं ॥ १ ॥" ॥ ९८ ॥ उक्ताया एव तनोर्भवधारणीयरूपतामुत्कृष्टतां च दर्शयन्नुत्तरवैक्रियरूपायास्तनोर्वक्तव्यतामाह–

भवधारणिज्ज एसा, उक्कोस विउव्वि जोअणा लक्खं ।
गेविज्जणुत्तरेसुं, उत्तरवेउव्विआ नत्थि ॥ ९९ ॥

व्याख्या–एषा-प्रागुक्ता तनुर्भवे सुरैर्देवायुःसमाप्तिं यावत् सततं धार्यतेऽसाविति भवधारणीया–स्वाभाविकं शरीरमित्यर्थः, किंभूता ? उत्कृष्यते इत्युत्कर्षा–उत्कृष्टेत्यर्थः, इदं च विशेषणं घण्टालालान्यायेनाग्रेऽपि सम्बध्यते, तेन भवनपत्यादिष्वच्युतान्तेषु देवानामुत्कृष्टा, 'विउव्वित्ति' सहजशरीरग्रहणोत्तरकालं कार्यमाश्रित्य विविधा क्रि-

यत इत्युत्तरवैक्रिया तनुर्योजनानि लक्षं–योजनलक्षप्रमाणा भवतीत्यर्थः, ग्रैवेयकेष्वनुत्तरेषु च देवानामुत्तरवैक्रिया तनुर्नास्ति, सत्यामपि शक्तौ प्रयोजनाभावतस्तदकरणात् ॥ ९९ ॥ अथ स्वाभाविकीमुत्तरवैक्रियां च जघन्यामवगाहनामाह—

साहाविअवेउविअ–तणू जहन्ना कमेण पारंभे ।
अंगुलअसंखभागो, अंगुलसंखेज्जभागो य ॥ १०० ॥

व्याख्या—सर्वेषामपि भवनपत्यादीनां स्वाभाविकी यथासंभवमुत्तरवैक्रिया च तनुर्जघन्या क्रमेण यथासंख्यमङ्गुलासंख्यातभागप्रमाणा, अङ्गुलसंख्यातभागप्रमाणा च, द्विविधाऽपि चेयं जघन्या तनुः प्रारम्भसमय एव भवतीति ॥ १०० ॥ अथ सुराणामवगाहनाद्वारं निगमयति—

सुरेसु ओगाहणा दारं समत्तं ।

इदानीं सुराणामेवोपपातच्यवनविरहकालरूपद्वारद्वयाभिधित्सया सम्बन्धमाह—

इण्हिं विरहकालो उववाओवट्टणाणं भण्णइ—

व्यक्तं । तत्रादावुत्कृष्टमुपपातविरहकालमाह—

सामन्नेणं चउविहसुरेसु बारस मुहुत्त उक्कोसो ।
उववायविरहकालो, अह भवणाईसु पत्तेअं ॥ १०१ ॥

व्याख्या—सामान्येन चतुर्विधेष्वपि–भवनपतिव्यन्तरज्योतिष्कवैमानिकरूपेषु देवेषूत्कृष्ट उपपातविरहकालो द्वादश मुहूर्त्ताः तदनन्तरमवश्यमन्यतमस्मिन् कश्चिद्देव उत्पद्यते एव । तथा च पञ्चसंग्रहः—"गब्भयतिरिनरसुरनारयाण विरहो मुहुत्तबारसगं । मुच्छिमनराण चउवीस, विगलममणाण अंतमुहू ॥ १ ॥" अथानन्तरं भवनपत्यादिषु प्रत्येकमुपपातविरहकालः, उच्यत इति शेषः ॥ १०१ ॥ तमेव गाथात्रयेणाह—

भवणवणजोइसोहम्मीसाणेसुं मुहुत्त चउवीसं ।
तो नवदिण वीस मुहू, बारस दिण दस मुहुत्ता य ॥ १०२ ॥

बावीस सड्ढदिअहा, पणयाल असीइ दिणसयं तत्तो ।
संखिज्जा दुसु मासा, दुसु वासा तिसु तिगेसु कमा ॥ १०३ ॥

वासाण सया सहसा, लक्खा तह चउसु विजयमाईसुं ।
पलिआअसंखभागो, सव्वट्ठे संखभागो उ ॥ १०४ ॥

व्याख्या—'उत्कृष्ट उपपातविरहकाल' इति प्राक्तनगाथागतस्य सर्वत्र सम्बन्धाद्भवनपतिवनचरज्योतिष्कसौधर्मैशानेषु प्रत्येकमुत्कृष्ट उपपातविरहकालश्चतुर्विंशतिर्मुहूर्त्ताः, इयमत्र भावना-भवनवास्यादिषु प्रत्येकमेकस्मिन् बहुषु वा देवेषूत्पन्नेषु सत्स्वन्य उत्कृष्टमन्तरं चतुर्विंशति मुहूर्त्तानि कृत्वा नियमत उत्पद्यत इति । तत ऊर्ध्वं सनत्कुमारे नव दिना विंशतिश्च मुहूर्त्ता अन्तरं, माहेन्द्रे द्वादश दिना दश मुहूर्त्ताः, ब्रह्मलोके सार्द्धा द्वाविंशतिर्दिवसाः, लान्तके पञ्चचत्वारिंशद्दिवसाः, शुक्रे अशीतिर्दिवसाः, सहस्रारे दिनशतं, ततो द्वयोः—आनतप्राणतयोः प्रत्येकं संख्येया मासाः, परमानतापेक्षया प्राणते प्रभूताः, ते च वर्षादर्वागेव, द्वयोः—आरणाच्युतयोः संख्येया वर्षाः, परमत्रारणापेक्षयाऽच्युते प्रभूताः, ते च वर्षशतादर्वागेव त्रिषु त्रिकेषु—क्रमात् 'मंखिज्जत्ति' अत्रापि सम्बन्धात् संख्येया वर्षाणां शताः सहस्रा लक्षाश्च, तथाहि—अधस्तनग्रैवेयकत्रिके संख्येया वर्षशताः, ते च सहस्रादर्वाक्, मध्यमत्रिके संख्येया वर्षसहस्राः, ते च लक्षादर्वाक्, उपरितनत्रिके संख्येया वर्षलक्षाः, ताश्च यावत्कोटी न पूर्यते, अन्यथा कोटीग्रहणमेव कुर्यादित्येवं सर्वत्र भावना कार्या, विशेषव्याख्या चैषा हारिभद्रमूलटीकानुसारतः, केचित्तु सामान्येन व्याचक्षते ।

जाव । रयणिचउक्कं देहो, अट्ठारससागरठिईणं ॥ २ ॥ आनतप्राणतारणाच्युतचतुष्के स्थापना । उक्तं च—"आण-

तथा चतुर्षु विजयवैजयन्तजयन्तापराजितेष्वद्धापल्योपमस्यासंख्येयो भागः, सर्वार्थसिद्धे तु पल्योपमस्य संख्येयो भागः । तथा च प्रज्ञापना—"विजयवैजयंतजयंतापराजिअदेवाणं भन्ते ! केवईअं कालं विरहिआ उववाएणं पन्नत्ता ? गोअमा ! जहन्नेणं एगं समयं, उक्कोसेणं असंखेज्जं कालं, सवट्ठसिद्धदेवाणं पुच्छा, गोअमा ! जहन्नेणं एगं समयं, उक्कोसेणं पलिओवमस्स संख्येज्जइभागं" इति । सूत्रे दिनदिवसमासवर्षशतसहस्रशब्दानां पुंनपुंसकत्वात् पुंस्त्वेन लक्षशब्दस्य च मानवृत्तेः स्त्रीनपुंसकत्वात् स्त्रीत्वेन निर्देशः ॥ १०२-१०३-१०४ ॥ उक्त उत्कृष्ट उपपातविरहकालः, साम्प्रतं जघन्यं दर्शयन् च्यवनविरहकालमप्यतिदेशतो गाथापूर्वार्द्धेनाह—

सव्वेसिंपि जहन्नो, समओ एमेव चवणविरहोऽवि ।

व्याख्या—सर्वेषामपि भवनवास्यादीनामनुत्तरान्तानां सुराणां जघन्य उपपातविरहकाल एकसमयः तथा च्यवनविरहकालोऽपि भवनवास्यादीनां सर्वेषामप्युत्कृष्टो जघन्यश्च एवमेव—उपपातविरहकालप्रकारेणैव, नवरं उपपातस्थाने च्यवनाभिलापः कार्यः ॥ उक्ते सुराणामुपपातच्यवनविरहद्वारे, सम्प्रत्युपपातमुद्वर्त्तनं चाश्रित्य संख्याद्वारद्वयं गाथापश्चिमार्द्धेनाह—

इगदुतिसंखमसंखा, इगसमए हुंति अ चवंति ॥ १०५ ॥

व्याख्या—भवनपत्यादिषु प्रत्येकमेकस्मिन् समये जघन्यत एको द्वौ त्रयो वा भवन्ति उत्पद्यन्ते, च्यवन्ते वा, उत्कर्षतः संख्याता असंख्याता वा, केवलं सहस्रारादूर्ध्वं सर्वत्र संख्याता एव, यतस्तस्मादूर्ध्वं मनुष्या एव गच्छन्ति, न तिर्यञ्चः, आनतादिच्युताश्च मनुष्येष्वेवागच्छन्ति न तिर्यक्षु, मनुष्याश्च संख्याता एवेति ॥ १०५ ॥ उक्ते उपपातोद्वर्तनासंख्याद्वारे, अधुना गतिद्वारमाह—

नरपंचिंदिअतिरिआणुप्पत्ती सुरभवे पजत्ताणं ।
अज्झवसायविसेसा, तेसिं गइतारतम्मं तु ॥ १०६ ॥

व्याख्या—नराणां पञ्चेन्द्रियतिरश्चां च उभयेषामपि पर्याप्तानां सुरभवे-देवलोके उत्पत्तिर्भवति, न शेषाणां देवनारकैकेन्द्रियविकलेन्द्रियापर्याप्तपञ्चेन्द्रियतिर्यङ्नराणां । देवभवोत्पत्तावेव हेतुमाह—'अध्यवसायविशेषादिति' अध्यवसायस्त्रिविधः—अशुद्धः शुद्धोऽत्यन्तशुद्धश्च, तत्राशुद्धस्य नरकगत्यादिहेतुत्वादत्यन्तशुद्धस्य तु मुक्तिप्रापकत्वादत्र देवायुर्बन्धनयोग्यः प्रशस्तमनोव्यापाररूपः शुद्धोऽध्यवसायो ग्राह्यः, एतेन शुभाशुभगत्यवाप्तौ मनोव्यापारस्य प्राधान्यमाह—उक्तं च—"चित्तरत्नमसंक्लिष्टमान्तरं धनमुच्यते । यस्य तन्मुषितं दोषैस्तस्य शिष्टा विपत्तयः ॥१॥" । अध्यवसायविशेषादिति च घण्टालालान्यायेनाग्रेऽपि सम्बध्यते । ततोऽयमर्थो-गतितारतम्यं कोऽपि कुत्रापि भवनप-

त्यादिस्थाने गच्छतीत्येवंरूपं पुनस्तेषां नरतिरश्चामध्यवसायस्य मनोव्यापारस्य विशेषात्, तत्तद्देवगतिप्राप्तिहेतुभिस्तीव्रतीव्रतरादिभेदैर्वैचित्र्यादिति ॥ १०६ ॥ अथ नरतिरश्चां देवगतिविषयमेव विशेषमाह—

नरतिरिअसंखजीवी, सव्वे निअमेण जंति देवेसुं ।
निअआउअ समहीणाउएसु ईसाणअंतेसुं ॥ १०७ ॥

व्याख्या—असंख्यातवर्षायुषो नरास्तिर्यञ्चश्च सर्वेऽपि नियमेन देवेषु यान्ति, देवगतिं विमुच्य शेषे गतित्रये मोक्षे च नैते गच्छन्तीत्यर्थः । एते चासंख्यातवर्षायुषो देवेषूत्पद्यमाना निजायुषो हीनस्थितिषु समस्थितिषु वा उत्पद्यन्ते, नाधिकस्थितिषु, ततः पल्योपमासंख्यातभागमात्रेणासंख्यातवर्षायुषः खचरतिर्यक्पञ्चेन्द्रियाः अन्तरद्वीपजास्तिर्यङ्नराश्च भवनपतिव्यन्तरेष्वेवोत्पद्यन्ते, न ज्योतिष्कसौधर्म्मेशानेषु, जघन्यतोऽपि ज्योतिष्केषु पल्योपमाष्टमभागस्य सौधर्म्मेशानयोश्च पल्योपमस्य सद्भावात्, शेषास्तु हैमवतैरण्यवतगताः हरिवर्षरम्यकभवाः देवकुरूत्तरकुरुभाविनः क्रमादेव एकद्वित्रिपल्योपमायुषः, तथा सुषमसुषमादिष्वरकेषु यथायोग्यं असंख्यातवर्षायुषो भरतैरावतभाविनश्च तिर्यग्मनुष्या यथासम्भवं भवनपतिव्यन्तरज्योतिष्कसौधर्म्मेशानेषूत्पद्यन्ते, तत ऊर्ध्वं तु सर्वथा निषेधः,

यत ईशानादूर्ध्वं सनत्कुमारादिषु जघन्यतोऽपि सागरोपमद्वयादिकेन स्थितिः, असंख्यातवर्षायुषां तिर्यङ्नराणां पुनरुत्कर्षतोऽपि त्रीण्येव पल्योपमानि, अत एव च सूत्रकृता ईशानान्तेष्वित्युक्तं ॥ १०७ ॥ तथा—

जंति समुच्छिमतिरिआ, भवणवणेसुं न जोइमाईसुं ।
जं तेसिं उववाओ, पलिआसंखंसआऊसुं ॥ १०८ ॥

व्याख्या—संमूर्च्छिमतिर्यञ्चो देवेषूत्पद्यमानां भवनपतिव्यन्तरेष्वेव यान्ति—गच्छन्ति, न ज्योतिष्कादिषु, यस्मात्तेषां सम्मूर्च्छिमतिरश्चां देवेषु पल्योपमासंख्यातभागमात्रस्थितिष्वेवोपपातो, नाधिकस्थितिषु ॥ १०८ ॥ अध्यवसायविशेषाद्गतितारतम्यतेत्युक्तमतस्तदेवाह—

बालतवे पडिबद्धा, उक्कडरोसा तवेण गारविआ ।
वेरेण य पडिबद्धा, मरिउं असुरेसु जायंति ॥ १०९ ॥

व्याख्या—अर्हद्वचनविकलास्तत्त्वतो ज्ञानशून्यत्वाद्बाला इव बालास्तेषां तपः—पञ्चाग्न्यादि तच्च तत्त्वतः सत्त्वोपघातहेतुत्वान्न तपः, तथा च महाभारते शान्तिपर्वणि कृष्णद्वैपायनोऽप्याह—"चतुर्णां ज्वलतां मध्ये, यो नर

तथा चतुर्षु विजयवैजयन्तजयन्तापराजितेष्वद्धापल्योपमस्यासंख्येयो भागः, सर्वार्थसिद्धे तु पल्योपमस्य संख्येयो भागः । तथा च प्रज्ञापना—"विजयवैजयंतजयंता…

सूर्यपञ्चमः । तपस्तपति कौन्तेय !, न तत्पञ्चतपः स्मृतम् ॥ १ ॥ पञ्चानामिन्द्रियाग्नीनां, विषयेन्धनचारिणाम् । तेषां तिष्ठति यो मध्ये, तद्धि पञ्चतपः स्मृतम् ॥ २ ॥" तस्मिन् प्रतिबद्धा-आसक्ताः, अथवा बालतपसि स्थिताः, तथा तत्तद्द्रव्यक्षेत्रकालभावेषु प्रतिबद्धाः, तथा उत्कटरोषाः—चण्डकोपाः, तथा तपसा—अनशनादिभेदेन गौरविता—वयं तपस्विन इति गर्वोध्माताः, तथा वैरेण—क्रोधानुशयरूपेण क्वचित्प्राणिनि द्वारवत्यां द्वीपायनवत् प्रतिबद्धाः—कृतानुबन्धाः सन्तः असुरेषु—असुरादिषु भवनवासिषु जायन्ते ॥ १०९ ॥ तथा—

रज्जुग्गहविसभक्खण—जलजलणपवेसतण्हछुहदुहओ ।
गिरिसिरपडणाउ मया, सुहभावा हुंति वंतरया ॥ ११० ॥

व्यक्ता । नवरं शुभभावा—नरकादिगतियोग्यात्यन्तरौद्रार्त्तचित्तपरिहारेण तथाविधमन्दशुभपरिणामाः शूलपाणिप्रभृतय इव ॥ ११० ॥ तथा—

तावस जा जोइसिआ, चरगपरिव्वाय बंभलोगो जा ।
जा सहस्सारो पंचिंदितिरिअ जा अच्चुओ सड्ढा ॥ १११ ॥

व्याख्या—तापसा—वनवासिनो मूलकन्दफलाहारास्ते, 'जंति उक्कोसन्ति' वक्ष्यमाणेन योगादुत्कर्षतो यान्ति-उत्पद्यन्ते, यावज्ज्योतिष्काः, तत ऊर्ध्वं नेति भावः। एवं चरका धाटिभिक्षाचराः, परिव्राजकाश्च—कपिलमतानुगा, यावद्ब्रह्मलोकः। पञ्चेन्द्रियतिर्यञ्चो—हस्त्यादयः सम्यक्त्वदेशविरतियुक्ताः, यावत्सहस्रारः, श्राद्धाः—श्रावका देशविरत-मनुष्याः यावदच्युतः ॥ १११ ॥ तथा—

जइलिंगमिच्छदिट्ठी, गेवेज्जा जाव जंति उक्कोसं।
पयमवि असद्दहंतो, सुत्तुत्तं मिच्छदिट्ठी उ ॥ ११२ ॥

व्याख्या—यतिलिङ्गिनो—रजोहरणादिसाधुवेषधारिणो मिथ्यादृष्टय उत्कर्षतो ग्रैवेयकान् यावद्यान्ति, एतदुक्तं भवति—प्रशमसंवेगनिर्वेदानुकम्पास्तिक्याभिव्यक्तिरूपसम्यक्त्वविकला अपि सम्पूर्णदशविधचक्रवालसामाचार्य-नुष्ठानप्रभावात् ग्रैवेयकान् यावदुत्कर्षतस्ते गच्छन्ति। मिथ्यादृष्टिस्तु सोऽप्यभिधीयते यः समग्रं द्वादशाङ्गं श्रद्दधानोऽपि सूत्रोक्तमेकमपि पदमक्षरं वा न श्रद्धत्ते, स्वल्पस्यापि सर्वविदोक्तस्याश्रद्धाने तत्र तस्याप्रत्ययात् ॥ ११२ ॥ सूत्रोक्त-मित्युक्तमतः सूत्रस्वरूपमाह—

सुत्तं गणहररइअं, तहेव पत्तेअबुद्धरइअं च।

सुअकेवलिणा रइअं, अभिन्नदसपुव्विणा रइअं ॥ ११३ ॥

व्याख्या—गणधरैः-सुधर्मस्वाम्यादिभी रचितमाचारादि, यच्च प्रत्येकबुद्धैः-नम्यादिभिर्नम्यध्ययनादि, यच्च श्रुतकेवलिना-चतुर्दशपूर्वधरेण शय्यम्भवादिना दशवैकालिकादि, यच्च सम्पूर्णदशपूर्वधारिणा रचितं, तत्सर्वं सूत्रमिति॥११३॥

तथा—

छउमत्थसंजयाणं, उववाउक्कोसओ उ सबट्ठे ।
तेसिं सड्ढाणंपिअ, जहन्नओ होइ सोहम्मे ॥ ११४ ॥

लंतंमि चउदपुव्विस्स तावसाईण वंतरेसु तहा ।
एसो उववायविही, निअनिअकिरिअठिआण सव्वोवि ॥ ११५ ॥

व्याख्या—छादयत्यात्मनो यथावस्थितं रूपमिति छद्म-ज्ञानावरणादिघातिकर्मचतुष्टयं, तत्रस्थाश्च ते संयताश्च, तेषां तूपपात उत्कर्षतस्त्रैलोक्यतिलके सर्वार्थसिद्धे विमाने, जघन्यतः पुनस्तेषां-छद्मस्थसाधूनां श्रावकाणामपि च सौधर्मे उपपातो भवति। केवलमत्रापि स्थितिकृतो विशेषो यथा-सौधर्मे साधोर्जघन्या स्थितिः पल्यो-

पल्यपृथक्त्वं, श्रावकस्य पल्योपममिति । तथा चतुर्दशपूर्वधरस्य लान्तके जघन्यत उपपातः, तापसादीनां तु व्यन्तरेषु, प्रज्ञापनायान्तु 'तावसाईणं जहन्नेणं भवणवईसु' इत्युक्तं । एष चोक्तरूपः सर्वोऽप्युपपातविधिर्निजनिजक्रियास्थितानां-निजनिजागमोक्तानुष्ठानरतानां, न स्वाचारहीनानामिति ॥ ११४ ॥ ११५ ॥ अयं च प्रागुक्तः सर्वोऽपि देवेषूपपातःसंहननविशेषाज्ञाविशेषेण सर्वेषामिति संहननान्याह—

वज्जरिसहनारायं, पढमं बीअं च रिसहनाराअं ।
नारायमद्धनारायं, कीलिआ तहय छेवट्ठं ॥ ११६ ॥

एए छस्संघयणा, रिसहो पट्टो य कीलिआ वज्जं ।
उभओ मक्कडबंधो, नाराओ होइ विन्नेओ ॥ ११७ ॥

व्याख्या—संहन्यन्ते संहतिविशेषं प्राप्यन्ते शरीरास्थ्यवयवा यैस्तानि संहननानि, दृढदृढतरादयः शरीरबन्धा, एतानि च षड् भवन्ति । तत्र प्रथमं वज्रऋषभनाराचं, वज्रं विना द्वितीयं ऋषभनाराचं, केचित्तु द्वितीयं वज्रनाराचमाहुः, वज्रं ऋषभं च विना तृतीयं नाराचं, चतुर्थमर्धनाराचं, पञ्चमं कीलिका, षष्ठं सेवार्त्तं । अथ के वज्रादयो ?

यद्योगात् संहननानि स्युरिति दर्शयति, 'रिसहो पट्टो य' इत्यादि । ऋषभः पुनरस्थिद्वयस्य वेष्टकः पट्टः, वज्रमिव वज्रं कीलिका, नाराचं उभयतो मर्कटबन्धः, ततो द्वयोरस्थ्नोरुभयतो मर्कटबन्धेन बद्धयोः पट्टाकृतिना तृतीयेनास्थ्ना परिवेष्टितयोरुपरि तदस्थित्रयभेदिकीलिकाकारं वज्राख्यमस्थि यत्र भवति तत् वज्रऋषभनाराचं, यत्पुनः कीलिकारहितं तदृषभनाराचं, पट्टरहितं वज्रनाराचमित्यन्ये, यत्रास्थ्नोर्मर्कटबन्ध एव केवलस्तन्नाराचं, यत्रैकपार्श्वे मर्कटबन्धोऽपरपार्श्वे च कीलिका तदर्द्धनाराचं, यत्रास्थीनि कीलिकामात्रबद्धानि तत्कीलिकाख्यं, यत्र त्वस्थीनि परस्परं पर्यन्तसंस्पर्शनरूपसेवामात्रेण व्याप्तानि नित्यं स्नेहाभ्यङ्गादिपरिशीलनमपेक्षन्ते तत्सेवया ऋतं—व्याप्तं सेवां वा प्राप्तं सेवार्त्तं, क्वचित् 'छेवट्ठमित्यपि' तत्र छेदस्पृष्टं छेदपृष्ठमिति वार्थः ॥ ११६ ॥ ११७ ॥ अथैतान्येव संहननानि जीवेषु विभागेनाह—

छ गब्भतिरिनराणं, समुच्छिपणिंदिविगलछेवट्ठं ।
सुरनेरइआ एगिंदिआ य सव्वे असंघयणा ॥ ११८ ॥

व्याख्या—गर्भजतिर्यङ्नराणां षट्—वज्रर्षभनाराचादीनि संहननानि भवन्ति । संमूर्च्छिमपञ्चेन्द्रियतिर्यङ्नराणां 'विगलत्ति' द्वित्रिचतुरिन्द्रियाणां च सेवार्त्तमेव । तथा च जीवाभिगमः—"से किं तं संमुच्छिमपंचेंदिअतिरिक्खजो-

णिआ २ तिविहा पन्नत्ता। तंजहा—जलयरा, थलयरा, खयरा, जाव छेवट्ठसंघयणी (णा) हुंडसंठिआ इत्यादि"। कार्मग्रन्थिकास्तु संमूर्च्छिमपञ्चेन्द्रियतिरश्चामपि षट् संहननान्याहुः। सुरनैरयिका एकेन्द्रियाश्च सर्वेऽप्येतेऽसंहननाः—संहननरहिताः, संहननस्यास्थिरचनात्मकत्वात्, प्रज्ञापनामूलोत्तरटीकादिषु तथा व्याख्यातत्वात्, तेषां च तदभावात्, तथा च जीवाभिगमः "सुरनेरइआ छण्हं संघयणाणं असंघयणी" इति। पुनरत्र हेतुहेतुमद्भावेनोक्तं—"नेवट्ठी नेव सिरा, नेव ह्वारु नेव संघयणमत्थित्ति"। यत्तु क्वचिदेकेन्द्रियाणां सेवार्त्तं क्वचिच्च देवानां वज्रर्षभनाराचमुक्तं, तदौपचारिकं, तथाहि—अस्थ्यात्मनः संहननाद्यः शक्तिविशेषः सोऽप्युपचारात् संहननं, शक्तिविशेषश्चात्यन्तमल्पीयानेकेन्द्रियाणामप्यस्ति, जघन्या च शक्तिः सेवार्त्तविषय इति तेषां सेवार्त्तमुक्तं, देवानां तु चक्रवर्त्यादिभ्योऽप्यत्यन्तमहती शक्तिः, सा चाद्यसंहननस्य विषय इति तेषामाद्यमुक्तं। एतेन 'सुत्ते सत्तिविसेसो, संघयणमिहट्ठिनिचउत्ति' यत्कैश्चिदुक्तं, तन्न सम्यक् ॥ ११८ ॥ अथ यत्संहननवशाद्येषु देवेषूत्पत्तिस्तदाह—

छेवट्ठेण उ गम्मइ, चउरो जा कप्प कीलिआईसु।
चउसु दुदुकप्पवुड्ढी, पढमेणं जाव सिद्धीवि ॥ ११९ ॥

व्याख्या—अत्र तुशब्दो विशेषे, स च 'अज्झवसायविसेसा उप्पत्ती सुरभवे' इत्यादिर्द्रष्टव्यः। ततोऽयमर्थः—

अध्यवसायविशेषात् सेवार्त्तेन षष्ठसंहननेन गम्यते । यावच्चत्वार एवाद्याः सौधर्म्मैशानसनत्कुमारमाहेन्द्राः कल्पाः, यावदिति सीमाकरणाच्च भवनपत्यादिष्वर्वाक्तनेषु गम्यत एव, सेवार्त्तेनैवेति तु नाज्ञावधार्यते, संहननान्तरैरपि तेषु गमनात्, तत ऊर्ध्वं तु पश्चानुपूर्व्यैव कीलिकादिषु चतुर्षु संहननेषु प्रत्येकं द्वयोर्द्वयोः कल्पयोरवधिभूतयोर्वृद्धिः, यथा—कीलिकया ब्रह्मलोकलान्तकौ यावद्गम्यते, अर्द्धनाराचेन शुक्रसहस्रारौ, नाराचेनानतप्राणतौ, ऋषभनार-चेनारणाच्युतौ, प्रथमेन तु वज्रर्षभनाराचसंहननेनाविशेषेण सर्वत्र गम्यते, आ सिद्धेरपि ॥ ११९ ॥ संहननानि च संस्थानाविनाभावीन्यतो नामाक्षयेण संस्थानान्याह—

समचउरंसनिग्गोह—साइ वामणय खुज्ज हुंडे य ।
जीवाण छ संठाणा, सव्वत्थ सलक्खणं पढमं ॥ १२० ॥

नाहीइ उवरि बीअं, तइअमहो पिट्ठिउअरउरवज्जं ।
सिरगीवपाणिपाए, सुलक्खणं तं चउत्थं तु ॥ १२१ ॥

विवरीअं पंचमगं, सव्वत्थ अलक्खणं भवे छट्ठं ।

मणुयतिरिअ छहा, सुरा समा हुंडया सेसा ॥ १२२ ॥

व्याख्या—संतिष्ठन्ते प्राणिनोऽनेनाकारविशेषेणेति संस्थानं, तत्षोढा समचतुरश्रं, न्यग्रोधपरिमण्डलं, सादि, वामनं, कुब्जं, हुंडं चेति, एतानि च षडपि संस्थानानि भवन्ति जीवानाम्, अजीवानां तु रूपिणां 'परिमंडले य वट्टे, तंसे चउरंसे आयए चेव'त्ति पञ्चधा। तत्र प्रथमं समचतुरश्रं संस्थानं सर्वावयवेषु लक्षणोपेतं, तथाहि—समा–लक्षणोपेताश्चतस्रोऽश्रयः चतुर्दिग्विभागोपलक्षिताः शरीरावयवा यत्र तत् समचतुरश्रं संस्थानं, समासान्तोऽत्, अत्राश् व्याप्तौ इत्यस्य धातोरश्रिशब्दस्तालव्यशकारः कोणवाची । यदा त्वसु क्षेपणे इत्यस्य धातोरस्रशब्दो दन्त्यसकारोऽकारान्तः कोणवाची च, तदा समाश्चत्वारोऽस्रा यस्य तत्समचतुरस्रमिति १। तथा न्यग्रोध उपरि सम्पूर्णोऽधस्तु हीनस्तथा यन्नाभेरुपरि लक्षणोपेततया संपूर्णमधस्तु न तथा तत् न्यग्रोधवत्परिमण्डलं यस्येति न्यग्रोधपरिमण्डलं २। आदिः इहोत्सेधाख्यो नाभेरधस्तनो भागः, सह आदिना वर्त्तत इति सादि। सादित्वं च सर्वेषामविशिष्टमतो विशेषणान्यथानुपपत्तेरादिरिह यथोक्तलक्षणो गृह्यते, तेन यन्नाभेरधो लक्षणेनोपपन्नमूर्ध्वं तु हीनं तत्सादीति ३। यत्र पृष्ठमुदरमुरश्च वर्जयित्वा शिरोग्रीवापाणिपादे यथोक्तलक्षणं भवति, तद्वामनं ॥४॥ यत्र तु शिरोग्रीवापाणिपादं विहाय शेषावयवेषु(स) लक्षणं भवति तत् कुब्जं॥५॥ केचित्तु वामनकुब्जयोर्व्यत्ययेन लक्षणमाहुः। सर्वाव-

यवेष्वलक्षणं हुण्डं॥६॥एतान्येव संस्थानानि जीवानां विभागेन दर्शयति—'गब्भयनरेत्यादि' नरास्तिर्यञ्चश्च उभयेऽपि गर्भजाः षोढा—षड्धा षड्भिरपि संस्थानप्रकारैर्भवन्ति, सुराः सर्वेऽपि समाः—समचतुरस्रसंस्थानाः, शेषाः नारकैकद्वित्रिचतुरिन्द्रियसंमूर्च्छिमपञ्चेन्द्रियतिर्यङ्नराः हुण्डसंस्थानाः,—तथा च प्रज्ञापना,—"संमुच्छिमतिरिक्खजोणिअपंचिंदिअओरालिअसरीरे णं भन्ते ! किं संठाणसंठिए पन्नत्ते ? गोअमा ! हुंडसंठाणसंठिए पन्नत्ते, गब्भवक्कंतिअतिरिक्खजोणिआणं पुच्छा, गोअमा ! छसंठाणसंठिआ पन्नत्ता, गब्भवक्कंतिअमणुस्साणं पुच्छा, गोअमा ! छसंठाणसंठिया, संमुच्छिममणुस्साण पुच्छा, गोयमा ! हुंडसंठाणसंठिआ पन्नत्ता' इत्यादि, कार्मग्रन्थिकास्तु संमूर्च्छिमतिरश्चां षट् संस्थानानि वर्णयन्ति । हुण्डत्वेऽपि च पृथिव्यप्तेजोवायुवनस्पतयो मसूरचन्द्रस्तिबुकबिन्दुसूचीकलापपताकाविचित्रसंस्थानाः । तथा 'वाउकाइआणं वेउव्विआवि सरीरा पडागासंठिआ, पञ्चिन्दिअतिरिअनराणं वेउव्विआ अच्चुअंताणं देवाणं उत्तरवेउव्विआ सरीरा नाणासंठाणसंठिआ पन्नत्ता । नारगाणं पुण उत्तरवेउव्विआवि हुंडसंठाणसंठिआ चेव" ॥ १२० ॥ १२१ ॥ १२२ ॥ गतं देवानां गतिद्वारं । अथैते देवाः स्वस्थानाच्च्युताः क्वागच्छन्तीत्यागतिद्वारमाह—

जंति सुरा संखाउअ,गब्भयपज्जत्तमणुअतिरिएसुं ।

पज्जत्तेसु अ बायरभूदगपत्तेअगवणेसुं ॥ १२३ ॥

व्याख्या—सुराः सामान्येन भवनपतिव्यन्तरज्योतिष्कवैमानिकाः, स्वस्थानाच्युताः सङ्ख्यायुष्कगर्भजपर्याप्तविशेषणविशिष्टेषु मनुजतिर्यक्षु तथा पर्याप्तबादरपृथिव्यप्कायिकेषु पर्याप्तप्रत्येकवनस्पतिषु च यान्ति—उत्पद्यन्ते, शेषेषु तु सूक्ष्मपृथिव्यप्कायिकेषु साधारणवनस्पतिषु अपर्याप्तेषु बादरपृथिव्यप्प्रत्येकवनस्पतिषु तेजोवायुद्वित्रिचतुरिन्द्रियेषु असङ्ख्यातायुष्कसंमूर्च्छिमापर्याप्ततिर्यङ्नरेषु देवनारकेषु च नैवोत्पद्यन्त इति भावः ॥ १२३ ॥ अत्रैव विशेषमाह—

तत्थवि सणंकुमार–प्पभिई एगिंदिएसु नो जंति ।
आणयपमुहा चविउं, मणुएसुं चेव गच्छंति ॥ १२४ ॥

व्याख्या—तत्रापीति विशेषचिन्तायां, सनत्कुमारप्रभृतयः सहस्रारान्ता देवा एकेन्द्रियेषु नो यान्ति, शेषेषु, यथोक्ततिर्यङ्मनुष्येष्ववोत्पद्यन्त इत्यर्थः । तथा आनतप्रमुखा अनुत्तरान्ता देवाश्च्युत्वा उक्तरूपेषु मनुष्येष्वेव गच्छन्ति, नैकेन्द्रियेषु, नापि तिर्यक्ष्विति भावः ॥१२४॥ इह च येषां देवानां यथा देव्युपभोगो येषां च सर्वथा नेत्येतदेवाह—

दो कप्प कायसेवी, दो दो दो फरिसरूवसद्देहिं ।
चउरो मणेणुवरिमा, अप्पवियारा अणंतसुहा ॥ १२५ ॥

व्याख्या—अत्र द्वौ कल्पाविति मर्यादायां, मञ्चाः क्रोशन्तीत्यादिवत् कल्पशब्देन तात्स्थ्यात्कल्पस्था देवाः, ततोऽयमर्थो—भवनपत्यादय ईशानान्ताः देवाः क्लिष्टोदर्कपुंवेदानुभावात् मनुष्यवन्मैथुने निमज्जन्तः सर्वाङ्गीणं कायक्लेशजं स्पर्शानन्दमासाद्य तृप्यन्ति, नान्यथेति, कायेन मैथुनसेवनशीलाः कायसेविनः, तत ऊर्ध्वं द्वौ द्वौ द्वौ कल्पौ यथासङ्ख्यं स्पर्शरूपशब्दैश्चत्वारश्चानतादयः कल्पा मनसा मैथुनसेविन इति शेषः, तथाहि—सनत्कुमारमाहेन्द्रदेवा देवीनां स्तनभुजोरुजघनादिगात्रसंस्पर्शमात्रेण सुरतजसुखमासादयन्ति, ब्रह्मलोकलान्तकसुराः सुरसुन्दरीणां मनोभवराजधानीस्थानीयं दिव्यमुन्मादजनकं रूपमालोक्य सुरतसुखमुपभुञ्जते, शुक्रसहस्रारदेवा रिरंसागोचरीकृतसुरविलासिनीनां गीतहसितसविलासभाषितभूषणादिध्वनिमाकर्ण्य कामसुखमवाप्नुवन्ति, आनतप्राणतारणाच्युतसुरास्तु रिरंसया यदैव देवीर्मनसि कुर्वन्ति तदैव ताः कृताद्भुतशृङ्गाराः स्वस्थानस्था एवोच्चावचानि चेतांसि धारयन्त्यो भोगायोपतिष्ठन्ते, ततस्ते तथावस्थास्ताः मनसैव संकल्प्य सुरतसुखमासादयन्ति । देव्यस्तु तथा कायसेवास्पर्शादिभिः सर्वत्र दिव्यप्रभावेण शरीरेषु शुक्रपुद्गलसञ्चारतः सुरतसुखमासाद्य तृप्यन्ति । तथा च प्रज्ञापना—

"अत्थि णं भंते ! तेसिं देवाणं सुक्कपुग्गला ? हंता ! अत्थि । तेणं भंते ! तासिं अच्छराणं कीसत्ताए भुज्जो भुज्जो परिणमंति ? गोअमा ! सोइंदिअत्ताए चक्खिदिअत्ताए घाणिंदिअत्ताए रसणिंदिअत्ताए फासिंदिअत्ताए इट्ठत्ताए कंतत्ताए मणुन्नत्ताए मणामत्ताए सुभगत्ताए सोहग्गरूवजोव्वणगुणलावण्णत्ताए एयासिं भुज्जो भुज्जो परिणमंति, जाव तत्थ णं जे ते मणपरिआरगा देवा तेसिं इच्छा मणे समुपज्जइ—इच्छामो णं अच्छराहिं सद्धिं मणपरिआरणं करित्तए, तओ णं तेहिं देवेहिं एवं मणसि कए समाणे खिप्पामेव ताओ अच्छराओ, तत्थ गयाओ चेव समाणीओ अणुत्तराइं उच्चावयाइं मणाइं पहारेमाणीओ पहारेमाणीओ चिट्ठन्ति, तओ णं ते देवा ताहिं अच्छराहिं सद्धिं मणपरिआरणं करेंति, सेसं निरवसेसं तं चेव जाव भुज्जो भुज्जो परिणमंति" । तत्र 'अत्थित्ति' सन्ति शुक्रपुद्गलाः, केवलं ते वैक्रियशरीरान्तर्गता इति न गर्भाधानहेतवः, 'कीसत्ताएत्ति' कीदृक्स्वरूपया 'भूयो भूय' इति यदा यदा क्षरन्ति तदा तदा इत्यर्थः । तथा उपरितनग्रैवेयकानुत्तरसुरा अप्रवीचाराः—मैथुनसेवारहिता, अत्यन्तमन्दपुंवेदोदयत्वान्मनसाऽपि न स्त्रीः प्रार्थयन्त इत्यर्थः । एते च सर्वे यथोत्तरमनन्तगुणसुखभाजः, तथाहि—कायसेविभ्योऽनन्तगुणसुखाः स्पर्शसेविनस्तेभ्योऽनन्तसुखा रूपसेविनस्तेभ्योऽनन्तसुखाः शब्दासेविनस्तेभ्योऽनन्तसुखा मनःसेविनस्तेभ्योऽप्यनन्तसुखा अप्रवीचाराः, प्रतनुमोहोदयतया प्रशमसुखान्तर्लीनत्वात् । यद्येवं कथं न ते ब्रह्मचारिणः उच्यन्ते ? तथा भवस्वभावतश्चारित्रपरिणामाभावात् ॥ १२५ ॥ प्रवीचारसुखादुपशमसुखस्याऽऽनन्त्यमुक्तं, तदेवाह—

जं च कामसुहं लोए, जं च दिव्वं महासुहं ।
वीअरायसुहस्सेअं, णंतभागंपि नग्घई ॥ १२६ ॥

गतार्थः श्लोकः, नवरं विशेषेण इतः—सर्वथैवापगतोऽत्यन्तमन्दीभूतो वा रागो मायालोभरूपो यस्य स वीतरागः, रागापगमे च क्रोधमानात्मकद्वेषापगमोऽपि ज्ञेयत एव, क्षपकश्रेण्यामक्षीणद्वेषस्य रागक्षयायोगात् । ततो विगतरागद्वेषस्य यत्प्रशमसुखं तस्यानन्ततममपि भागमेतद्द्विरूपं कामजं सुखं नार्घति—न लभते ॥ १२६ ॥ देवीनामुत्पत्तिस्थानान्याह—

उववाओ देवीणं, कप्पदुगं जाव परउ सहस्सारा ।
गमणागमणं नत्थि अ, अच्चुअपरओ सुराणंपि ॥ १२७ ॥

व्याख्या—भवनपतीनारभ्य यावत्सौधर्मेशानकल्पद्विकं तावद्देवीनामुपपातो—जन्म, नोर्ध्वं, देवानां तूपपातः सर्वत्र भवत्येव, सनत्कुमारादिदेवानां च सुरताभिलाषे सौधर्मादीशानाद्यापरिगृहीता देव्यः सहस्रारं यावद्गच्छन्ति । सहस्राराच्च परतो गमनमागमनं च देवीनां नास्ति । तथा च मूलसङ्ग्रहणीटीकायां हरिभद्रसूरिः—"देव्यः खल्वपरिगृ-

हीताः सहस्रारं यावद्गच्छन्तीति"। तथा भगवानार्यश्यामोऽपि प्रज्ञापनायामाह—"तत्थ णं जे ते मणपरिआरगा देवा तेसिं इच्छा मणे समुप्पज्जइ—इच्छामो णं अच्छराहिं सद्धिं मणपरिआरणं करित्तए, तओ णं तेहिं एवं मणसि कए समाणे खिप्पामेव ताओ अच्छराओ तत्थ गयाओ चेव समाणीओ अणुत्तराइं उच्चावयाइं मणाइं पहारेमाणीओ २ चिट्ठंति, तओ णं ते देवा ताहिं अच्छराहिं सद्धिं मणपरिआरणं करेंति" इत्यादि। तत्र प्रवीचारणार्थमप्यानतादौ देवीनां गत्यागती न स्तः 'आरणयअच्चुआओ, गमणागमणं तु देवदेवीण' मित्यादिपूर्वसंग्रहणीगतप्रक्षेपगाथायास्तु संवादं न पश्यामः। तथा अच्युतात्परतः सुराणामपि, आस्तां देवीनां, गमागमौ न स्तः, तत्राधस्तनानामूर्ध्वं शक्त्यभावादुपरितनानां त्विहागमने प्रयोजनाभावात्। ग्रैवेयकानुत्तरसुरा हि जिनजन्ममहिमादिष्वपि नात्रागच्छन्ति, किन्तु स्थानस्था एव भक्तिमातन्वते। संशयप्रश्ने चावधिज्ञानतो भगवत्प्रयुक्तानि मनोद्रव्याणि साक्षादवेत्य ततस्तदाकारान्यथानुपपत्त्या जिज्ञासितमर्थं निश्चिन्वन्ति, न चान्यत् प्रयोजनं, तन्न तेषामिहागमः ॥ १२७ ॥ अथ वैमानिकेषु किल्विषिकाणामाभियोग्यानां च देवानां स्थित्यादिकमाह—

तिपलिअ तिसार तेरस–सारा कप्पदुग तइअ लंतअहो।
किब्बिसिअ न होंतुवरिं, अच्चुअपरओऽभिओगाई ॥ १२८ ॥

व्याख्या—किल्बिषिकाः–अशुभकर्मकृतश्चाण्डालप्राया देवास्ते त्रिपल्योपमादिस्थितयः, क्रमात् कल्पत्रिकादेरधो वसन्ति, तथाहि–त्रिपल्योपमस्थितयस्ते सौधर्मेशानयोरधो वसन्ति, एवं त्रिसागरोपमायुषः सनत्कुमारस्याधः, त्रयोदशसागरोपमायुषो लान्तकस्याधः। एते च किल्बिषिका 'न होंतुवरिं' ति, लान्तकादूर्ध्वं नैवोत्पद्यन्ते, अच्युतात्परतस्त्वाभियोग्या–दासप्राया आदिशब्दात् प्रकीर्णकादयश्च नोत्पद्यन्ते। इदमुक्तं भवति–ग्रैवेयकानुत्तरेषु सर्वेषामपि देवानामहमिन्द्रत्वेन शेषाणामपि सामानिकादिदेवभेदानामभाव इति ॥ १२८ ॥ अथापरिगृहीतदेव्यो(येषु) विमानेषूत्पद्यन्ते तत्संख्यां दर्शयन् यदायुर्विशिष्टा एता येषां देवानामुपभोगाय भवन्ति, तदेतद्गाथाचतुष्टयेनाह—

अपरिग्गहदेवीणं, विमाणलक्खा छ हुंति सोहम्मे।
पलिआई समयाहिय, ठिइ जासिं जाव दस पलिया ॥ १२९ ॥
ताओ सणंकुमाराणेवं वड्ढन्तपलिअदसगेहिं।
जा बंभसुक्कआणयआरणदेवाण पन्नासा ॥ १३० ॥
ईसाणे चउलक्खा, साहिअपलिआइ समयअहिअठिई।

जा पनरपलिअ जासिं, ताओ माहिंददेवाणं ॥ १३१ ॥

एएण कमेण भवे, समयाहिअ पलिअदसगवुड्ढीए ।
लंतसहसारपाणयअच्चुअदेवाण पणपन्ना ॥ १३२ ॥

व्याख्या—न विद्यते परिग्रहो यासां ता अपरिग्रहा–अपरिगृहीतास्तासां देवीनां केवलानामुत्पत्तिस्थानभूतानि विमानानि षट् लक्षाः सौधर्म्मे भवन्ति, एषु च विमानेषु यासां देवीनां पूर्णमेकं पल्योपमं स्थितिस्ताः सौधर्मदेवानामेवोपभोग्या, यासां तु पल्योपमादिः पल्योपममादिं कृत्वा समयाधिका एकद्वित्रिसंख्यातासङ्ख्यातसमयैरभ्यधिका स्थितिर्यावत् पूर्णानि दश पल्योपमानि ताः सर्वा अपि 'सणंकुमाराणंति' 'तात्स्थ्यात्तद्व्यपदेश' इति सनत्कुमारदेवानां भोग्या, उपरितनदेवास्तु ताः सर्वथा नेच्छन्ति । एवं प्रागुक्तक्रमेण एकद्वित्रिसंख्यातासंख्यातसमयवृद्धिरूपेण वर्धमानैः पल्योपमानां दशकैर्यावत्पञ्चाशत्पल्योपमानि भवन्ति तावद् ब्रह्मलोकशुक्रानतारणदेवानां क्रमेण भोग्या देव्यो भवन्ति । इयमत्र भावना–याः सौधर्म्मे देव्यः पल्योपमदशकादूर्ध्वं समयादिवृद्ध्या यावद्विंशतिपल्योपमस्थितिकास्ता ब्रह्मलोकदेवानां भोग्या, ऊर्ध्वं समयादिवृद्ध्या यावत्त्रिंशत्पल्योपमस्थितयः शुक्रदेवानां भोग्याः,

ततः समयादिवृद्ध्या यावच्चत्वारिंशत्पल्योपमस्थितय आनतदेवानां स्वस्थानस्था एव स्त्रीभावप्रवृत्तमनोव्यापारालम्बनं भवन्ति, ततः समयादिवृद्ध्या यावत्पञ्चाशत्पल्योपमस्थितय आरणदेवानामिति । ईशाने त्वपरिगृहीतदेवीनां चत्वारि विमानलक्षाणि, तेषु यासां साधिकं पल्योपमं स्थितिस्ता ईशानदेवानामेव भोग्याः, ततः साधिकपल्योपमादूर्ध्वं समयादिवृद्ध्या यावत्पञ्चदश पल्योपमानि यासां स्थितिस्ता माहेन्द्रदेवानां, तदनन्तरमेतेनोक्तक्रमेण समयाद्याधिक्यतः पल्योपमदशकानां वृद्ध्या हेतुभूतया लान्तकादिदेवानां तावद्भोग्या देव्यो यावदच्युतदेवभोग्यदेवीनां भवेत्पल्योपमानां पञ्चपञ्चाशत्, तथाहि—या ईशानदेव्यः पञ्चदशपल्योपमेभ्य ऊर्ध्वं समयादिवृद्ध्या यावत्पञ्चविंशतिपल्योपमस्थितयस्ता लान्तकदेवानां भोग्याः, पञ्चविंशतेः ऊर्ध्वं यावत्पञ्चत्रिंशत्पल्योपमस्थितयः सहस्रारदेवानां भोग्याः, ततो यावत्पञ्चचत्वारिंशत्पल्योपमस्थितयः प्राणतदेवानां स्वस्थानस्थाश्चित्तालम्बनं भवन्ति, ततो यावत्पञ्चपञ्चाशत्पल्योपमस्थितयोऽच्युतदेवानामिति ॥ १२९–१३०–१३१–१३२ ॥ अथ लेश्याभिधानपूर्वकं देवानां लेश्याविभागमाह—

किण्हा नीला काऊ, तेऊ पम्हा य सुक्क लेसा य ।
भवणवण पढमचउलेस जोइस कप्पदुगे तेऊ ॥ १३३ ॥

कप्पतिअपम्हलेसा, लंताइसु सुक्कलेस हुंति सुरा ।

व्याख्या—लिश्यते श्लिष्यते जीवः कर्मणा सहाभिरिति लेश्याः, कृष्णादिद्रव्यसाचिव्यादात्मनः शुभाशुभाः परिणामाः । उक्तं च—"कृष्णादिद्रव्यसाचिव्यात्परिणामो य आत्मनः । स्फटिकस्येव तत्रायं, लेश्याशब्दः प्रवर्त्तते ॥ १ ॥" एवं चैता यद्यपि भावलेश्या एव तथाऽपीह तद्धेतवोऽवस्थिताः कृष्णादिद्रव्यरूपा द्रव्यलेश्या एव प्रतिपत्तव्याः, न भावलेश्याः, तासामनवस्थितत्वात्, नापि बाह्यवर्णरूपा, बाह्यवर्णस्य देवानामुक्तत्वाद्वक्ष्यमाणत्वाच्च, एतच्च नारकलेश्याभिधानप्रस्तावे व्यक्तीकरिष्यते । एताश्च षट्, कृष्णा नीला कापोता तेजः पद्मा शुक्ला चेति । तत्र भवनवासिनो वनचराश्च प्रथमाश्चतस्रो लेश्या येषां ते प्रथमचतुर्लेश्याः, कृष्णा नीला कापोता तैजसी चैषां लेश्या भवन्तीत्यर्थः । तत्रापि परमाधार्मिकाः कृष्णलेश्याः । तथा ज्योतिश्चक्रे कल्पद्विके च—सौधर्मेशानरूपे तेजोलेश्याका देवाः ॥ १२२ ॥ तथा कल्पत्रिके सनत्कुमारमांहेन्द्रब्रह्मलोकाख्ये देवाः पद्मलेश्याः, तत ऊर्ध्वं लान्तकादिष्वनुत्तरान्तेषु देवाः शुक्ललेश्या भवन्ति, सर्वापि च लेश्या यथोत्तरस्थानं विशुद्धविशुद्धतरा बोद्धव्या, भावलेश्यास्तु देवानां प्रतिनिकायं यथासम्भवं षडपि भवन्ति । तथा च तत्त्वार्थटीकायां हरिभद्रसूरिः 'भावलेश्याः षडपीष्यन्ते देवानां प्रतिनिकायमिति" ॥

वैमानिकदेवानां वर्णविभागं गाथापश्चिमार्द्धेनाह—

कणगाभपउमकेसर–वण्णा दुसु तिसु उवरि धवला ॥ १३४ ॥

व्याख्या—अत्रापि सुरा इतिसम्बन्धात्, द्वयोः–सौधर्मेशानयोर्देवाः कनकाभाः–सुवर्णत्वगिव रक्तच्छायाः, तथा त्रिषु–सनत्कुमारमाहेन्द्रब्रह्मलोकेषु पद्मकेसरवद्गौराः, तत ऊर्ध्वं लान्तकादिष्वनुत्तरान्तेषु शुक्लाः, यथोत्तरं शुक्लशुक्लतरशुक्लतमावदातवर्णाः, न चैवं 'सोहम्मीसाणदेवा कणगत्तयरत्ताभा, सणंकुमारमाहिंददेवा पउमपम्हगोरा, बंभलोगलंतगदेवा अल्लमहुअपुप्फवण्णाभा, सेसेसु सुक्किलत्ति' अस्य जीवाभिगमसूत्रस्य व्याघातः, यतो ब्रह्मलोकदेवाः परिणततरार्द्रमधूकपुष्पवर्णाभा अपि सन्तो मनाग् गौरत्वचस्ततः पद्मपक्ष्मगौरेष्वन्तर्भवन्ति । लान्तकदेवास्त्वपरिणततरार्द्रमधूकपुष्पवर्णाभा अपि प्राय आपाण्डुतनव इति शुक्लेष्वन्तर्भवन्ति, एवं चार्द्रमधूकपुष्पवर्णाभत्वमुभयत्राप्यविरुद्धमिति ॥ १३४ ॥

देवानामेवाहारोच्छ्वासविधिमाह—

दसवाससहस्साई, जहन्नमाउं धरन्ति जे देवा ।
तेसिं चउत्थाहारो, सत्तहिँ थोवेहिँ ऊसासो ॥ १३५ ॥

व्याख्या—ये देवा भवनपतयो व्यन्तराश्च जघन्यं दशवर्षसहस्राण्यायुर्धरन्ति, तेषामाहाराभिलाषश्चतुर्थादित (अर्थात्) अहोरात्रादुत्पद्यते, सति चाहाराभिलाषे तन्मात्रोपस्थितसर्वेन्द्रियाह्लादिमनोज्ञपुद्गलेभ्यस्तृप्यन्ति । तथा सप्तभिस्तोकैर्वक्ष्यमाणैरुच्छ्वासः—शरीरान्तर्गतप्राणरूपपवनोत्सर्पणं, सप्तसप्तस्तोकातिक्रमे एवोच्छ्वसन्ति, शेषकालं च तदाबाधया रहिताः स्तिमिता एव तिष्ठन्तीत्यर्थः ॥ १३५ ॥

अथ स्तोकस्य तत्प्रसङ्गाल्लवमुहूर्त्तयोश्च मानमाह—

आहिवाहिविमुक्कस्स, नीसासूसास एगगो ।
पाणू सत्त इमो थोवो, सोवि सत्तगुणो लवो ॥ १३६ ॥
लवाण सत्तहत्तरीए, होइ मुहुत्तो—

व्याख्या—आधिः—मनोबाधा, व्याधिः—शरीरमन्दता, ताभ्यां विमुक्तस्य, विशब्दाच्चिन्ताश्रमादिमात्रेणापि रहितस्य, सामर्थ्यान्मनुष्यस्यैकको निःश्वासयुक्तः उच्छ्वासः प्राणोऽभिधीयते. शोकादिभिरस्वास्थ्ये निःश्वासोच्छ्वासोऽन्यथाऽपि स्यादित्याधिव्याधिविमुक्तस्येत्युक्तं । सप्त इमे प्राणाः स्तोकः, सोऽपि स्तोकः सप्तगुणो लवः ॥१३६॥ लवानां च सप्तसप्तत्या मुहूर्त्तो—घटिकाद्वयरूपो भवति । अस्मिंश्च मुहूर्त्ते आवलिकानामेका कोटी सप्तषष्टिर्लक्षाः सप्तसप्ततिः

सहस्राः द्वे शते षोडशाधिके । उक्तं च, 'एगा कोडी सत्तट्ठिलक्खा सत्तत्तरीसहस्सा य । दो य सया सोलहिआ, आवलिआणं मुहुत्तंमि ॥ १ ॥'

अथैकस्मिन् मुहूर्ते अहोरात्रे च प्राणसंख्यामाह—

इगंमि उसासा । सगतीससय तिहुत्तर, तीसगुणा ते अहोरत्ते ॥ १३७ ॥

लक्खं तेरस सहसा, नउअसयं—

व्याख्या—सप्तभिः प्राणैरेकःस्तोकः, सप्तभिश्च स्तोकैरेको लव इति सप्त सप्तभिर्गुण्यन्ते, जाता एकोनपञ्चाशत्, सा लवानां सप्तसप्तत्या गुण्यते, जाता अस्मिन्मुहूर्ते उच्छ्वासाः सप्तत्रिंशत् शतानि त्रिसप्तत्यधिकानि ३७७३, एकस्मिंश्चाहोरात्रे त्रिंशन्मुहूर्त्ता भवन्ति इत्येकमुहूर्तगतोच्छ्वासास्त्रिंशता गुण्यन्ते, जाता अहोरात्रे ते उच्छ्वासा लक्षमेकं त्रयोदश सहस्रा नवत्यधिकं च शतमिति ११३१९० । यदा तु मासे उच्छ्वाससंख्या ज्ञातुमिष्यते तदा ते एवाहोरात्रगतोच्छ्वासा मासे त्रिंशदहोरात्राणीति त्रिंशता गुण्यन्ते, ततो भवन्ति ।(त्रयस्त्रिंशल्लक्षाः पञ्चनवतिः सहस्राः सप्त च शतानि, वर्षे मासा द्वादशेति द्वादशभिर्गुणिते)वर्षे उच्छ्वासाश्चतस्रः कोट्यः सप्त लक्षाः अष्टाचत्वारिंशत्सहस्राः चत्वारि शतानि४०७४-८४००, एते च शतगुणा वर्षशते भवन्त्युच्छ्वासाः चत्वारि कोटिशतानि सप्त कोटयः अष्टाचत्वारिंशल्लक्षाश्चत्वारिंशत्

त्सहस्राः ४०७४८४००००, एवं वर्षसहस्रादिष्वपि भावनीयं ॥ साम्प्रतं सागरोपमसंख्यया आहारोच्छ्वासयोः कालमानमाह—

अयर संखया देवे । पक्खेहिं ऊसासो, वाससहस्सेहिं आहारो ॥ १३८ ॥

व्याख्या—'देवेत्ति' देवानां मध्ये यस्य देवस्य यावन्त्यतराण्यायुस्तस्य तावद्भिः पक्षैरुच्छ्वासस्तावद्भिर्वर्षसहस्रैराहारो, यथैकसागरोपमायुषश्चमरस्य पक्षेणोच्छ्वासो वर्षसहस्रेणाहारो यावत्सर्वार्थे त्रयस्त्रिंशता पक्षैरुच्छ्वासस्त्रयस्त्रिंशता वर्षसहस्रैराहारः ॥ १३८ ॥

अथ वर्षसहस्रदशकस्थितेरूर्ध्वं यावत् सागरोपममसम्पूर्णम्, एतावत्यंतराले आहारोच्छ्वासकालमानमाह—

दसवाससहस्सुवरिं, समयाई जाव सागरं ऊणं ।

दिवसमुहुत्तपुहुत्ता, आहारूसास सेसाणं ॥ १३९ ॥

व्याख्या—येषामुक्तेभ्यः शेषाणां देवानां, दशवर्षसहस्रेभ्य ऊर्ध्वं समयादि—समयावलिकामुहूर्तदिवसमाससंवत्सरयुगैकद्वित्र्यादिपल्योपमरूपं यावत्किञ्चिदूनं सागरोपममायुस्तेषां दिवसपृथक्त्वादाहारो, मुहूर्तपृथक्त्वादुच्छ्वासः । पृथक्त्वमागमभाषया द्विप्रभृतिरानवभ्यः संख्योच्यते । सूत्रे च 'पुहुत्तति' एकवचननिर्देशो जात्यपेक्षः, ततोऽयं

भावार्थो—दशवर्षसहस्रेभ्य ऊर्ध्वं समयादिवृद्धौ यथाक्रममाहारोच्छ्वासयोर्दिवसमुहूर्तपृथक्त्वानि तावद्वर्धनीयानि यावत्पूर्णसागरोपमायुषां पक्षादुच्छ्वासो वर्षसहस्रादाहार इति भावना ॥ १३९ ॥

अथ 'आहाहारो तिविहो, ओए लोमे य पक्खेवे' इत्यागमात् आहारस्त्रिविधः, स च कथं स्यादित्याह—

सरिरेणोआहारो, तयाइ फासेण लोमआहारो ।
पक्खेवाहारो पुण, कावलिओ होइ नायव्वो ॥ १४० ॥

व्याख्या—शीर्यते उत्पत्तिक्षणादूर्ध्वं प्रतिक्षणं नश्यतीति शरीरं, तेनैव केवलेन य आहार स ओजआहारः, इदमुक्तं भवति—यद्यपि शरीरमौदारिकवैक्रियाहारकतैजसकार्मणभेदात् पञ्चधा, तथापीह तैजसेन तत्सहचारिणा कार्मणेन च शरीरेण पूर्वशरीरत्यागे विग्रहेणाविग्रहेण वोत्पत्तिदेशं प्राप्तो जन्तुर्यत् प्रथममौदारिकादिशरीरयोग्यान् पुद्गलानाहारयति यच्च द्वितीयादिसमयेष्वौदारिकादिमिश्रेणाहारयति यावत् शरीरनिष्पत्तिः, यदुक्तम्—"जोएण कम्मएणं, आहारेइ अणंतरं जीवो । तेण परं मीसेणं, जाव सरीरस्स निप्फत्ती ॥ १ ॥" एष सर्वोऽप्योजस्तैजसशरीरं तेनाहार ओजआहारः । तथा त्वचा—त्वगिन्द्रियेण स्पर्शनेन य आहारः—शरीरोपष्टम्भकपुद्गलादानं स लोमभिः—लोमरन्ध्रैराहारो लोमाहारः । यः पुनराहारः कावलिकः कवलैर्निष्पन्नो भवति, स मुखे कवलादेः प्रक्षेपात् प्रक्षेपाहारो ज्ञातव्यः ॥ १४० ॥

अथ यस्यामवस्थायां जीवानां य आहारस्तदाह—

ओआहारा सव्वे, अपजत्त पजत्त लोमआहारो ।
सुरनिरएगिंदि विणा, सेस भवत्था सपक्खेवा ॥ १४१ ॥

व्याख्या—ओजः उत्पत्तिदेशे स्वशरीरयोग्यः पुद्गलसंघातस्तदाहारयन्ति, यद्वा ओजस्तैजसशरीरं तेनाहारो येषामित्योजआहाराः, सर्वे एकेन्द्रियादयः पञ्चेन्द्रियान्ता अपर्याप्ताः, अपर्याप्तत्वं च शरीरपर्याप्तिमपेक्ष्य, नाहारपर्याप्तिं, तदपर्याप्तकानामनाहारकत्वात्, सर्वाभिः स्वयोग्यपर्याप्तिभिरपर्याप्ता ओजआहारा इत्यन्ये, तदप्युक्तं, यद्वृद्धाः, "शरीरपर्याप्तेरारभ्य यथायोग्यमङ्गप्रत्यङ्गैर्लोमाहारतः समन्ततः पुद्गलादानमिति" । तथा शरीरपर्याप्त्या पर्याप्ताः सर्वे जीवा लोमाहाराः, तथा सुरान्नैरयिकानेकेन्द्रियांश्च विना शेषा भवस्था द्वित्रिचतुरिन्द्रियाः पञ्चेन्द्रियतिर्यङ्नराश्च सप्रक्षेपाः, सत्यभिलाषे कवलाहारोऽप्येषां भवतीत्यर्थः । सुरनारकैकेन्द्रियाणां तु नास्ति प्रक्षेपः, ते हि पर्याप्त्युत्तरकालं स्पर्शेन्द्रियेणैवाहारयन्तीति कृत्वा लोमाहारा भवन्तीत्यर्थः । तत्र देवानां मनसा परिकल्पिताः शुभाः पुद्गलाः सर्वेणैव कायेनाहारतया परिणमन्ति, नारकाणां त्वशुभाः, तांश्चाहार्यमाणपुद्गलान् विशुद्धावधिचक्षुर्भावादनुत्तरसुरा एव जानन्ति पश्यन्ति, न पुनर्नारकग्रैवेयकान्तदेवाः ॥ १४१ ॥

आहारगतमेव विशेषमाह—

सच्चित्ताचित्तोभयरूवो आहार सव्वतिरिआणं ।
सव्वनराणं च तहा, सुरनेरइआण अच्चित्तो ॥ १४२ ॥

व्याख्या—सर्वेषां तिरश्चां सर्वेषामपि च नराणामाहारः सचित्ताचित्तोभयरूपत्रिविधोऽपि भवति । कदाचित् सचित्तः कदाचिदचित्तः कदाचिदुभयस्वभाव इत्यर्थः । सुरनैरयिकाणां पुनराहारः सदैवाचित्त एव ॥१४२॥ तथा—

आभोगणाभोगा, सव्वेसिं होइ लोमआहारो ।
निरयाणं अमणुन्नो, परिणमइ सुराण स मणुन्नो ॥ १४३ ॥

व्याख्या—आभोगनमाभोगोऽभिप्रायः, तत्रापर्याप्तावस्थायां सर्वेषामपि जन्तुनामाहारोऽनाभोगनिर्वर्तितः, प्रावृट्काले प्रचुरतरमूत्राद्यभिव्यङ्ग्यशीतपुद्गलाद्याहारवत्, पर्याप्तानां पुनः सर्वेषां लोमाहारः सततमुपजायमान आभोगतोऽनाभोगतश्च भवति, स उपजायमानः कदाचित्संवेद्यते, कदाचिन्नेति भावः । नवरमेकेन्द्रियाणामतिस्तोकापटुमनोद्रव्यलब्धीनामाभोगमान्द्याद्वस्तुतोऽनाभोगनिर्वर्तित एव, यदागमः—"एगिंदिआणं नो आभोगनिव-

त्तिए, अणाभोगनिव्वत्तिते"। 'तत्र निरयाणां' नारकाणां स लोमाहारोऽमनोज्ञः—प्रतिकूलकर्मोदयवशादमनोज्ञतया परिणमति। सुराणां तु मनोज्ञः, शुभकर्म्मोदयवशतो मनोज्ञतया परिणमति, ततश्चैषां तृप्तिपूर्वः परमसन्तोषो जायते, अतश्चैत एव समये मनोभक्षिणोऽभिधीयन्ते न नारकाः ॥ १४३ ॥

अथाहारप्रस्तावान्नारकतिर्यङ्नराणामाहारकालमानमाह—

तह विगलनारगाणं, अंतमुहुत्ता स होइ उक्कोसा।
पंचिंदितिरिनराणं, साहाविय छट्ठअट्ठमओ ॥ १४४ ॥

व्याख्या—तथा विकलानां द्वित्रिचतुरिन्द्रियाणां नारकाणां चाहारे गृहीते सति भूयः स आहार—आहाराभिलाष उत्कर्षतोऽन्तर्मुहूर्त्तादूर्ध्वमुपजायते। एकेन्द्रियाणां त्वाहाराभिलाषः सन्तत इति तदन्तरं नोक्तं, तथा चार्षे-ऽस्यामः "पुढविकाइआणं भंते! केवइकालस्स आहारट्ठे समुप्पज्जइ? गो० अणुसमयं अविरहिए, एवं जाव वणस्सइ-काइआ" इति। तथा पञ्चेन्द्रियतिरश्चां नराणां चोत्कर्षतः स्वाभाविक आहारः क्रमात् षष्ठादष्टमाच्च जायते। तिरश्चा-महोरात्रद्वयातिक्रमादित्यर्थः, मनुष्याणां अहोरात्रत्रयातिक्रमादित्यर्थः। एतच्चोत्कृष्टमाहारान्तरं देवकुरूत्तरकुरुषु सुषमसुषमायां भरतैरावतयोश्च (त्रि) पल्योपमायुषामवसेयं, न शेषाणां। तथा स्वाभाविकग्रहणादिदं तिर्यक्पञ्चे-

न्द्रियाणां मनुष्याणां चाहाराभिलाषान्तरपरिमाणं तपोरोगाद्यभावे स्वभावसिद्धमिति प्रतिपत्तव्यं, तपोरोगादिभावे तु यथासम्भवं मासद्विमासाद्यपि स्यादेव । उच्छ्वासस्तु नारकाणां सततं, एकद्वित्रिचतुःपञ्चेन्द्रियतिर्यङ्नराणां त्वनियतमात्रः ॥ १४४ ॥

अथ के जीवा अनाहारकाः, के चाहारका ? इत्याह—

विग्गहगइमावन्ना, केवलिणो समोहया अजोगी अ ।
सिद्धा य अणाहारा, सेसा आहारगा जीवा ॥ १४५ ॥

व्याख्या—विग्रहगतिः—भवाद्भवान्तरे विश्रेण्या गमनं, तामापन्नाः—प्राप्ताः सर्वेऽपि जीवास्तथा केवलिनः समुद्धताः—कृतसमुद्घातास्तथा अयोगिनः—शैलेश्यवस्थास्तथा सिद्धाः—क्षीणकर्म्माष्टकाः, सर्वेऽप्येतेऽनाहारकाः । एतद्व्यतिरिक्ताः शेषाः सर्वेऽप्याहारकाः । तत्र विग्रहापन्नाः उत्कर्षतो वक्ष्यमाणनीत्या चतुरः समयान्, केवलिनः समुद्घातेऽष्टसामयिके तृतीयचतुर्थपञ्चमरूपान् केवलकार्मणयोगयुतान् त्रीन् समयान्, अयोगिनः शैलेश्यवस्थायामन्तर्मुहूर्तं, सिद्धाः साद्यपर्यवसितं कालमनाहारका इति ॥ १४५ ॥

अथ प्रसङ्गाद्देवानामेव स्वरूपमाह—

केसट्ठिमंसनहरोमरुहिरवसचम्ममुत्तपुरिसेहिं ।
रहिआ निम्मलदेहा, सुगंधिनीसासगयलेवा ॥ १४६ ॥

अंतमुहुत्तेणं चिअ, पज्जत्ता तरुणपुरिससंकासा ।
सव्वंगभूसणधरा, अजरा निरुआ समा देवा ॥ १४७ ॥

व्याख्या—सर्वेऽपि देवाः प्राग्भवोपात्तशुभकर्मोदयप्रभावात्सदैव केशास्थिश्मश्रुनखरोमरुधिरवसाचर्म्ममूत्रपुरीषै रहिताः, तथा निर्म्मलदेहा—अवदातशरीरपुद्गलाः, सुगन्धिनिःश्वासा—विशिष्टपरिमलाभिराममुखमारुताः, गतलेपा-जात्यस्वर्णवत् रजःप्रस्वेदाद्युपलेपरहिताः, उपलक्षणं चेदं, तेन सर्वोत्तमवर्णगन्धरसस्पर्शसौभाग्यादिगुणग्रामाभि-रामविग्रहास्ते इति । तथा उत्पत्तिसमये अन्तर्मुहूर्त्तेनैव पर्याप्ताः सन्तस्तरुणपुरुषसंकाशा—अत्यन्ततरुणपुरुषतुल्या, न मनुष्यवत्पुरन्ध्रिगर्भाधिवासजन्मादिक्रमेण, सर्वाङ्गेषु—शिरःप्रभृतिषु तदवयवेषु च कर्णग्रीवादिषु, भूषणधराः, अजरा—अवस्थितयौवनाः, नीरुजः—काशश्वासादिरहिताः, समाः समचतुरस्रसंस्थानाः ॥ १४७ ॥

तथा—

अणिमिसनयणा मणकज्जसाहणा पुप्फदामअमिलाणा ।

चउरंगुलेण भूमिं, न छिवंति सुरा जिणा बिंति ॥ १४८ ॥

व्याख्या—सर्वे सुराः स्वभावतोऽनिमिषनयना–निमेषरहितलोचना, अपरिमितसामर्थ्यान्मनसा कार्यं साधयन्तीति मनःकार्यसाधना, नन्द्यादित्वादनः, 'पुप्फदामअमिलाणत्ति' प्राकृतत्वादम्लानपुष्पदामानोऽम्लानवक्षःस्थलाद्यालम्बितपुष्पमाला इत्यर्थः । पृथ्वीतलमवतीर्णाश्चतुरङ्गुलेन–चतुर्भिरङ्गुलैर्भूमिं न स्पृशन्तीति जिना ब्रुवते ॥ १४८ ॥

अधुना यतो हेतोः सुरा इहागच्छन्ति तमाह—

पंचसु जिणकल्लाणेसु चेव महरिसितवाणुभावाओ ।

जम्मंतरनेहेण य, आगच्छंती सुरा इहइं ॥ १४९ ॥

व्याख्या—स्पष्टा, नवरं तीर्थकृत्कल्याणकेषु–गर्भजन्मव्रतज्ञानमोक्षलक्षणेषु, महर्षेस्तपोऽनुभावात्, जन्मान्तरस्नेहेन च शालिभद्रादिपित्रादय इव, चशब्दादमर्षादिभ्यः सङ्गमकादय इव ॥ १४९ ॥

यथोक्तनिमित्तमन्तरेणान्यदा किमिति देवा नागच्छन्तीत्याह—

संकंतदिव्वपेमा, विसयपसत्ताऽसमत्तकत्तव्वा ।
अणहीणमणुअकज्जा, नरभवमसुहं न इंति सुरा ॥ १५० ॥

व्याख्या—'निमित्तकारणहेतुषु सर्वासां विभक्तीनां प्रायो दर्शन'मिति वचनात् सर्वत्र हेतौ प्रथमा, ततः संक्रान्तदिव्यप्रेमत्वादित्यादि योज्यं, भावार्थस्तु यदैव दिवि देवा उत्पद्यन्ते, तदैव तेषामत्यन्तरम्यासु देवाङ्गनासु दिव्यं प्रेम संक्रामति । तथा विषयेषु स्वर्गसम्बन्धिष्विच्छामात्रोपनतेषु रम्यरूपरसगन्धस्पर्शशब्देषूत्पत्त्यनन्तरमेव ते प्रसक्ता—अत्यन्तासक्ता भवन्ति । अत एवासमाप्तकर्त्तव्याः तत्तन्मज्जनकप्रेक्षणकेक्षणादिकर्त्तव्यपरम्परायाः असमाप्तेः, तथा—'अणहीणमणुअकज्ज'त्ति प्राकृतत्वान्मनुजानधीनकार्याः, अचिन्त्यशक्तितया विनापि मनुष्यान् स्वयमेव स्वप्रयोजननिष्पादनात् । तत एभिः कारणैर्नरभवं—मनुष्यलोकमशुभं—अशुभगन्धं नायान्ति सुराः ॥ १५० ॥

एतदेव व्यनक्ति—

चत्तारि पंच जोअणसयाइँ गंधो उ मणुअलोअस्स ।
उड्ढं वच्चइ जेणं, न उ देवा तेण आवन्ति ॥ १५१ ॥

व्याख्या—अत्राद्यस्तुशब्दो वाशब्दार्थो भिन्नक्रमः, ततो येन कारणेन चत्वारि पञ्च वा योजनशतानि यावन्मनुष्यलोकस्य सम्बन्धी मृतकलेवरमूत्रपुरीषादेर्गन्ध ऊर्ध्वं व्रजति—गच्छति, तेन कारणेन देवा नतु—नैव मनुष्यलोके आगच्छन्ति । इयद्दूरं च यावद्गन्धगमनमूर्ध्वं गच्छद्भिर्गन्धपुद्गलैरन्यान्यपुद्गलानां तथा तथा वासनादवसेयं । अन्यथा योजननवकात्परतो गता गन्धपुद्गला घ्राणेन्द्रियस्याविषय इत्यागमस्य व्याघातः स्यात् । तत्र यदा नरक्षेत्रे तिर्यङ्नराः प्रभूता मृतककलेवराणि च भूयांसि भवन्ति तदा पञ्च शेषकालं तु चत्वारि योजनशतानि ऊर्ध्वं गन्धो गच्छतीति ॥ १५१ ॥

एते च देवा 'भवप्रत्ययो नारकदेवाना' ( तत्त्वार्थ० अ० १ सू० २२ ) मिति वचनात् सदैवावधिज्ञानिनः, ततो भवनपतिव्यन्तरज्योतिष्कवैमानिकानामवधिं विवक्षुरुत्कर्षतो वैमानिकानां तावदाह—

दो पढमकप्प पढमं, दो दो दो बीअतइअगचउत्थिं ।
चउउवरिमओहीए, पासंति अ पंचमिं पुढविं ॥ १५२ ॥

व्याख्या—द्वौ प्रथमौ कल्पौ प्रथमां पृथिवीमवधिना पश्यतः, तत्राधारे आधेयोपचारादयमर्थः—सौधर्मेशानकल्पयोरिन्द्रौ तत्समानिकादयश्चोत्कृष्टायुषो रत्नप्रभायाः सर्वाधस्तनभागं यावदवधिना पश्यन्ति । एवमग्रेऽपि भाव-

नीयं। तत ऊर्ध्वं द्वौ सनत्कुमारमाहेन्द्रौ कल्पौ द्वितीयां शर्कराप्रभां यावत् पश्यतः। एवं द्वौ—ब्रह्मलोकलान्तकौ तृतीयां—वालुकाप्रभां। द्वौ—शुक्रसहस्रारौ चतुर्थीं—पङ्कप्रभां। तथा चत्वारः उपरितनाः कल्पा—आनतप्राणतारणाच्युताः पञ्चमीं—धूमप्रभां यावत्पश्यन्ति, नवरमानतप्राणतदेवेभ्यः आरणाच्युतदेवास्तामेव विशुद्धतरां बहुपर्यायां च, तत्राप्यानतदेवेभ्यः प्राणतदेवाः, आरणदेवेभ्यश्चाच्युतदेवाः सविशेषां पश्यन्ति, एवं प्रागुत्तरत्र च सर्वत्र भावनीयं ॥ १५२ ॥

तथा—

छट्ठिं छग्गेविज्जा, सत्तमिमिअरे अणुत्तरसुरा उ।
किंचूणलोगनालिं, असंखदीवुदहि तिरिअं तु ॥ १५३ ॥
बहुअयरगं उवरिमगा, उड्ढं सविमाणचूलिअधयाई।

व्याख्या—अधस्तनमध्यमरूपाः पट् ग्रैवेयकाः षष्ठीं—तमःप्रभां पृथिवीं यावत्पश्यन्ति। इतरे—त्रय उपरितनग्रैवेयकाः, सप्तमीं—तमस्तमःप्रभां, अनुत्तरसुरास्तु स्वविमानध्वजादूर्ध्वमदर्शनात्किञ्चिदूनां लोकनालिं—पञ्चास्तिकायावच्छिन्नक्षेत्रसंस्थानरूपां चतुर्दशरज्जुप्रमाणामवधिना पश्यन्ति। तिर्यक्पुनरेते सौधर्म्मादिदेवा असंख्यातान् द्वीपान् असं-

ख्यातानुदधीनवधिना पश्यन्ति, केवलमेतदेव द्वीपसमुद्रासंख्यातकं 'उवरिमगा' इति उपर्युपरितनग्रैवेयकवासिनो देवा, नतुकत्तरं उपलक्षणाद्बहुतमं च तिर्यगवधिना पश्यन्ति, तेषां विशुद्धविशुद्धतरावधिज्ञानसद्भावात्, ऊर्ध्वं तु स्वस्वविमानचूलिकाध्वजादीन् यावत् पश्यन्ति, न परतः, तथा भवस्वाभाव्यात् । एवमेतावता वैमानिकानामुत्कृष्टोऽवधिरभिहितो, जघन्यस्त्वमीषामङ्गुलासङ्ख्यातभागप्रमाणो द्रष्टव्यः, तथा चावश्यकचूर्णिः—'वेमाणिआ सोहम्माओ आरब्भ जाव सव्वट्ठसिद्धगा देवा ताव जहन्नेण अंगुलस्स असंखेज्जइभागं ओहिणा जाणंति पासंति' अयं च सर्वजघन्योऽवधिः 'उक्कोसो मणुएसुं, मणुस्सतेरिच्छिएसु य जहन्नो' इत्यागमाद्यद्यपि तिर्यङ्मनुष्येष्वेव भवति, तथापि सौधर्मादिदेवानामप्युपपातकाले कदाचित्पूर्वभवसम्बन्धी प्राप्यते । तथा च भगवान् क्षमाश्रमणः "वेमाणिआणमङ्गुलभागमसङ्खं जहन्नओ होइ । उववाए परभविओ, तब्भवजो होइ तो पच्छा ॥ १ ॥" पारभविकत्वाच्चायं सूत्रकृता नोक्तः ॥ १५३ ॥

उक्तं वैमानिकानामधस्तिर्यगूर्ध्वं चावधिक्षेत्रमिदानीं सामान्यतः शेषदेवानामाह—

ऊणद्ध सागरे सङ्ख—जोअणा तप्परमसङ्खा ॥ १५४ ॥
पणवीसजोअण लहू ।

व्याख्या—ऊनेऽर्द्धे सागरोपमे आयुषि सति भवनपतिव्यन्तरज्योतिष्कदेवाः सङ्ख्येयानि योजनान्यवधिना पश्यन्ति। ततः परमधिकायुषोऽसंख्येयानि योजनानि, केवलमायुर्वृद्ध्या योजनासंख्यातकस्यापि वृद्धिर्वाच्या । तथा लघु–जघन्यमवधिक्षेत्रमेषां पञ्चविंशतियोजनानि, तानि च दशवर्षसहस्रायुषां भवनपतिव्यन्तराणामेव बोद्धव्यानि । 'पणवीसजोअणाइं दसवाससहस्सिआ ठिई जेसिं' मित्यागमात् । ज्योतिष्काणां पुनरसंख्येयस्थितिकत्वाज्जघन्यतोऽप्यवधिक्षेत्रं संख्येययोजनप्रमिताः संख्येया द्वीपसमुद्राः, उत्कर्षतोऽपि ते एव, केवलमधिकतराः, अयमेवार्थोऽतिस्पष्टनार्थमावश्यकचूर्ण्यक्षरैर्विवेकेन दर्श्यते, यथा "दसण्हवि भवणवासीणं जहन्नओ पणवीसं जोअणाइं, उक्कोसओ असुरकुमारवज्जाणं संखेज्जाइं जोअणाइं । असुरकुमाराणं पुण असंखेज्जे दीवसमुद्दे । वाणमन्तराणं जहन्नुक्कोसओ ओही जहा असुरवज्जाणं भवणवासीणं, जोइसिआणं जहन्नेणवि उक्कोसेणवि संखेज्जे दीवसमुद्दे" इति ॥ साम्प्रतं नारकामरतिर्यङ्नराणामवधिक्षेत्रस्य संस्थानं किञ्चिदूनगाथाद्वयेनाह—

नारयभवणवणजोइकप्पाणं। गेवेज्जणुत्तराण य, जहसंखं ओहिआगारा ॥ १५५ ॥

तप्पागारे पल्लगपडहगझल्लरिमुइंगपुप्फजवो ।

तिरिअमणुएसु ओही, नाणाविहसंठिओ भणिओ ॥ १५६ ॥

व्याख्या—नारकभवनपतिव्यन्तरज्योतिष्ककल्पोपपन्नाना ग्रैवेयकाणां अनुत्तराणां च देवानां सम्बन्धिनोऽवधेः-अवधिक्षेत्रस्याकारा यथासंख्यममी भवन्ति, तद्यथा—तप्राकारः पल्लकाकारः पटहकाकारः झल्लर्याकारः मृदङ्गाकारः पुष्पचङ्गेर्याकारः कन्याचोलकापरपर्यायजवनालकाकारश्चावधिरिति । तप्रादिस्वरूपं च व्यक्ताभिः क्षमाश्रमणगाथाभिरेवाभिधीयते—तप्पेण समागारो, तप्पागारो स चाययत्तंसो । उद्धायओ य पल्लो, उवरिं च स किंचि संखित्तो ॥ १ ॥ नच्चायओ समोविअ, पडहो हेट्ठोवरिं पईओ सो । चम्मावणद्धविच्छिन्नवलयरूवा य झल्लरिआ ॥ २ ॥ उद्धायओ मुइंगो, हिट्ठा रुंदो तहोवरिं तणुओ । पुप्फसिहावलिरइआ, चंगेरी पुप्फचंगेरी ॥ ३ ॥ जवनालओत्ति भण्णइ, उब्भो सरकंचुओ कुमारीए" इति तिर्यङ्मनुष्याणामवधिर्नानाविधसंस्थानसंस्थितो, यथा

---

१ तप्रश्च किलायतत्र्यस्रो भवति । पल्यको धान्याधारभूतोऽत्रैव प्रतीतः, स च ऊर्ध्वायत उपरि किञ्चित्संक्षिप्तः, पटहक आतोद्यविशेषः प्रतीत एव, स च नात्यायतोऽध उपरि च समः, उभयतो विस्तीर्णचर्मावनद्धमुखा मध्येसंकीर्णा ढक्कालक्षणातोद्यविशेषरूपा झल्लरी, मृदङ्गोऽप्यातोद्यमेव, स चोर्ध्वायतोऽधोविस्तीर्ण उपरि च तनुकः ॥

स्वयम्भूरमणोदधौ मत्स्याः, केवलमेषां वलयाकारो नास्ति, तिर्यङ्नरावधिस्तु तदाकारोऽपि, उक्तं च—"णाणागारो तिरिअमणुएसु मच्छा सयंभूरमणेव । तत्थ वलयं निसिद्धं, तस्स पुण तयंपि होज्जाहि ॥ १ ॥" ॥ १५६ ॥

अथ नारकतिर्यङ्नरामराणां मध्ये कस्यां कस्य दिशि प्रभूतोऽवधिरिति प्रतिपादयन्नाह—

उड्ढं भवणवणाणं, बहुगो वेमाणिआणऽहो ओही ।
नारयजोइस तिरिअं, नरातिरिआणं अणेगविहो ॥ १५७ ॥

व्याख्या—भवनपतीनां व्यन्तराणां चावधिरूर्ध्वं बहुकः—प्रभूतः, तथा च पञ्चमाङ्गम्—'तएणं से चमरे असुरिन्दे असुरराया चमरचञ्चाए रायहाणीए उववायसभाए जाव देवत्ताए उववन्ने पज्जत्तभावं गए समाणे उड्ढं वीससाए ओहिणा आभोगेइ, जाव सोहम्मो कप्पो, पासइ अ तत्थ सक्कं देविन्दं देवराय" मित्यादि, चमरचञ्चायाश्चोर्ध्वं

---

१ यवनालकः स च कन्याचोलकको ऽवगन्तव्यः । अयं च मरुमण्डलादिप्रसिद्धश्चरणकरूपेण कन्या परिधानेन सह सीवितो भवति येन परिधानं नरवसन्ति, कन्यानां च मस्तकसत्कपक्षेणायं प्रक्षिप्यते, अयं चोर्ध्वसरकंचुक इति व्यपदिश्यते, इति सार्धगाथात्रयविषमार्थः श्रीविशेषावश्यकभाष्यटीकायां ॥

सौधर्म्मोऽसंख्याताभिर्योजनकोटीकोटीभिरिति न्यक्कं भवनपत्यवधेरूर्ध्वं प्रभूतत्वं. शेषासु तु दिक्षु स्वल्पविषय एवावधिः । एवमन्यत्रापि भावनीयं । तथा वैमानिकानामधः प्रभूतोऽवधिः, नारकज्योतिष्काणां तिर्यक् प्रभूतः, नरतिरश्चामनेकविधो विचित्र इति ॥ १५७ ॥

साम्प्रतं देवाधिकारमुपसंहरन्नरकाधिकारमभिधित्सुर्गाथापूर्वार्धमाह—

इय देवाणं भणियं, ठिइपमुहं नारयाण वोच्छामि ।

व्याख्या—इति–पूर्वप्रकारेण, देवानां स्थितिप्रमुखं–स्थितिभवनावगाहनाउपपातविरहच्यवनविरहएकसमयोपपातसंख्याएकसमयच्यवनसंख्यागत्यागतिरूपं द्वारनवकं प्रसङ्गाद्वर्णादि च भणितं । इदानीमिदमेव स्थित्यादिद्वारनवकं नारकाणां सम्बन्धित्वेन वक्ष्यामि । तत्र सप्तस्वपि नरकपृथ्वीषु क्रमेणोत्कृष्टां जघन्यां च स्थितिं सार्द्धगाथया प्राह—

इग तिन्नि सत्त दस सतर अयर बावीस तेत्तीसा ॥ १५८ ॥

सत्तसु पुढवीसु ठिई, जेट्ठोवरिमा य हेट्ठपुढवीए ।

होइ कमेण कणिट्ठा, दसवाससहस्स पढमाए ॥ १५९ ॥

व्याख्या—'अयर'त्ति, सर्वत्र सम्बन्धाद्रत्नप्रभायामेकं सागरोपमं ज्येष्ठा—उत्कृष्टा स्थितिः, एवं शर्कराप्रभायां त्रीणि, वालुकाप्रभायां सप्त, पङ्कप्रभायां दश, धूमप्रभायां सप्तदश, तमःप्रभायां द्वाविंशतिः, तमःतमःप्रभाया त्रयस्त्रिंशत्सागरोपमाणि, एवं सप्तसु पृथ्वीषु ज्येष्ठा स्थितिरुक्ता । एषा च 'उवरिम'त्ति उपर्युपरिपृथ्वीगता ज्येष्ठा स्थितिरधस्तन्यामधस्तन्यां पृथिव्यां क्रमेण कनिष्ठा—जघन्या भवति । तथाहि—या रत्नप्रभायामेकसागरोपमरूपोत्कृष्टा स्थितिः, सा शर्कराप्रभायां जघन्या । एवं यावत्तमस्तमःप्रभायां कालादिषु नरकावासेषु द्वाविंशतिः सागरोपमाणि जघन्या, प्रथमायां तु रत्नप्रभायां दशवर्षसहस्राणि जघन्येति । जघन्योत्कृष्टान्तरालवर्तिनी तु स्थितिः सर्वत्र मध्यमा बोद्धव्या ॥ १५९ ॥

इह सप्तस्वपि पृथ्वीषु प्रतरसंख्या 'तेरिक्कारसनवसगपणतिन्निगपयर' इति वक्ष्यमाणा, ततः प्रतिप्रतरं स्थितिं विवक्षुरादौ रत्नप्रभायामुत्कृष्टां सर्वासु च जघन्यां प्रतरस्थितिं गाथाद्वयेनाह—

नवइसमसहसलक्खा, पुव्वाणं कोडि अयरदसभागो ।
एगेगभागवुड्डी, जा अयरं तेरसे पयरे ॥ १६० ॥
इअ जिट्ठ जहन्ना पुण, दसवाससहस्स लक्ख पयरदुगे ।

मेसेसु उवरिजिट्ठा, अहो कणिट्ठा उ पइपुढविं ॥ १६१ ॥

व्याख्या—रत्नप्रभायां प्रथमे प्रतरे उत्कृष्टा स्थितिर्नवतिः समानां—वर्षाणां सहस्राः ९००००, एवं द्वितीये नवतिर्वर्षलक्षाः ९००००००, तृतीये पूर्वाणां वक्ष्यमाणरूपाणामेका कोटिः, चतुर्थे सागरोपमस्य दशमो भागः, अत ऊर्ध्वं पञ्चमादिषु तावदेकैकभागवृद्धिर्यावत् त्रयोदशे प्रतरे दशभिर्भागैः पूर्णं सागरोपमं, इत्युक्तनीत्या ज्येष्ठा स्थितिरुक्ता, जघन्या पुनः प्रथमप्रतरद्विकं क्रमाद्दशवर्षसहस्राः दशवर्षलक्षाश्च, शेषेषु तृतीयादिषु प्रतरेषु यैवोपर्युपरि ज्येष्ठा स्थितिः सैवाधोऽधः कनिष्ठा भवति, एवमधोऽधः कनिष्ठा तु प्रतिपृथ्वि बोद्धव्या। व्यक्तं चैतत्तथाप्यति-स्पष्टतार्थं यन्त्रस्थापना ॥ १६०—१६१ ॥

उक्ता रत्नप्रभायामुत्कृष्टा सर्वासु च जघन्या प्रतिप्रतरं स्थितिः, साम्प्रतं शेषपृथ्वीषु प्रतिप्रस्तटमुत्कृष्टस्थित्यभिधानार्थं करणमाह—

उवरिखिइठिइविसेसो, सगपयरविहत्तु इच्छसंगुणिओ ।
उवरिमखिइठिइसहिओ, इच्छिअपयरंमि उक्कोसा ॥ १६२ ॥

व्याख्या—उपरितनक्षितौ या उत्कृष्टा स्थितिस्तस्या इष्टपृथिव्युत्कृष्टस्थितेः सकाशाद्विश्लेषे—अपनयने शेषमप्युपचाराद्विश्लेषः, स स्वकप्रतरैर्विभज्यते, लब्धं चेष्टप्रतरसंख्यया गुण्यते, गुणिते चागतमुपरितनक्षित्युत्कृष्टस्थितिसहितमिष्टप्रतरे उत्कृष्टा स्थितिर्भवति । यथा—शर्कराप्रभायामुत्कृष्टा स्थितिस्त्रीणि सागरोपमाणि, तेभ्यो रत्नप्रभासत्कोत्कृष्टा स्थितिरेकसागरोपमरूपा विश्लेष्यते, स्थिते द्वे सागरोपमे, तयोः शर्कराप्रभागतैरेकादशभिः प्रतरैर्भागे हृते लब्धौ द्वौ सागरोपमस्यैकादशभागौ, ताविष्टैकप्रतरगुणितावपि द्वावेव, उपरितनोत्कृष्टस्थितिसाहित्ये च जाता शर्कराप्रभायाः प्रथमे प्रस्तटे उत्कृष्टा स्थितिरेकमतरं द्वौ चैकादशभागावतरस्य । एवं प्रतिप्रतरं तावद्भागद्वयवृद्धिर्यावदेकादशे प्रतरे एकमतरं द्वाविंशतिर्भागा, एकादशभिश्च भागैरतरकरणे जातानि त्रीण्यतराणि, या च पूर्वपूर्वप्रस्तटे उत्कृष्टा सा उत्तरोत्तरप्रस्तटे प्रागुक्तप्रकारेण जघन्या । अत्रापि यन्त्रकस्थापना । एवमन्यत्रापि करणभावना कार्या, केवलं वालुकापङ्कधूमतमःप्रभासु चतसृषु सुखावबोधार्थं चतुर्णां यन्त्रकाणां स्थापना । तमस्तमःप्रभायां त्वेक एव प्रतरस्तत्र द्वाविंशतिर्जघन्या, त्रयस्त्रिंशत्सागरोपमाण्युत्कृष्टा स्थितिरिति । एतावतीं च स्वस्वस्थितिं यावन्नारकाः सदा वेदनार्त्ताः, यज्जीवाभिगमः—“अच्छिनिमीलणमित्तं, नत्थि सुहं दुक्खमेव अणुबद्धं । नरए नेरइआणं, अहोनिसिं पच्चमाणाणं ॥ १ ॥” विशेषाश्चात्र यथा—

उववाएण व सायं, नेरइओ देवकम्मुणा वावि । अज्झवसाणनिमित्तं, अहवा कम्माणुभावेणं ॥ १ ॥

व्याख्या—यः प्राग्भवे दाहच्छेदादिना मृतोऽनतिसंक्लिष्टो नारको जायते, न तस्य प्राग्भवानुबद्धं नापि क्षेत्रपरमाधार्मिकान्यकृतमसातमित्यसावुपपातसमये सातं वेदयते, देवकर्मणा यथा बलदेवात् कृष्णस्य वेदनोपशमः, सोऽपि कञ्चित्कालं, तत ऊर्ध्वमवश्यं क्षेत्रजाऽन्या वा वेदना स्यादेव, अध्यवसानाद्यथा सम्यक्त्वलाभे चक्षुर्लाभ इव जात्यन्धस्य, तत ऊर्ध्वं वा कदाचित्तीर्थकृदादिगुणानुमोदनादेर्बाह्यवेदनाभावेऽपि तीर्थकृज्जन्माद्यपेक्ष्य सातकर्म्मणो विपाकोदयतो वेति। सा च वेदना त्रिविधा—क्षेत्रजा, परस्परजा, परमाधार्मिककृता च। तत्र क्षेत्रजा रत्नशर्करावालुकाप्रभासूष्णा, एते नरकाः शीतयोनिकत्वेन केवलहिमप्रख्यशीतप्रदेशात्मकत्वात्, योनिस्थानादन्यत्र च सर्वस्यापि भूम्यादेः खादिराङ्गारेभ्योऽप्यत्यन्ततप्तत्वादुष्णवेदनामनुभवन्तीति प्रवचनवेदिनः, एवमन्यास्वपि भावनाभ्यूह्या। पङ्कायां बहुषूपरितनेषु नरकावासेषूष्णा, अधः स्तोकेषु शीता, धूमायां बहुषु शीता स्तोकेषूष्णा, षष्ठ्यां सप्तम्यां च केवला शीतैव। इयं च वेदना सर्वाप्यधोऽधोऽनन्तगुणतया तीव्रा तीव्रतरा तीव्रतमा च, तत्र नरकेषू-

ष्णायाः शीतवेदनायाश्च स्वरूपमेवमागमज्ञाः प्रज्ञापयन्ति, यथा—निदाघचरमसमये नभोमध्यमधिरूढे चण्डमहसि मेघवियुक्ते नभसि कस्यापि पुंसोऽत्यन्तं पित्तप्रकोपाभिभूतस्य निषिद्धातपवारणस्य सर्वतो दीप्तवह्निज्वालाकरालस्य यादृगुष्णवेदना जायते, ततोऽप्युष्णवेदनेषु नरकेषु नारकाणामनन्तगुणा। अपि च यदि नारका उष्णवेदनेभ्यो नरकेभ्य उत्पाट्य ज्वलत्खादिराङ्गारराशौ प्रक्षिप्य ध्मायन्ते, तदा चन्दनलिप्ता इवात्यन्तसुखा

निद्रामपि लभेरन् । तथा पौषे माघे वा रात्रौ निरभ्रे नभसि हृदयादिकम्पकृति चातिमारुते हिमाचलस्थलीकृतस्थितेर्निरग्नेर्निराश्रयस्य निरावरणस्य तुषारकणसिक्ताङ्गस्य पुंसो या शीतवेदना, ततोऽपि शीतवेदनेषु नरकेषु नारकाणामनन्तगुणा । किञ्च—यदि नारकाः शीतवेदनेभ्यो नरकेभ्य उत्पाट्य यथोक्तपुरुषस्थाने स्थाप्यन्ते, तदा ते प्राप्तात्यन्तनिर्वातस्थाना इव निरुपमसुखा निद्रामप्यासादयेयुरिति । योऽपि बन्धनगतिसंस्थानभेदवर्णगन्धरसस्पर्शागुरुलघुशब्दरूपो दशविधः पुद्गलानां परिणामः, सोऽपि नरकेषु तथाक्षेत्रस्वाभाव्यादतिदुःखदः । तथाहि—प्रतिक्षणमाहार्यैस्तैस्तैः पुद्गलैः सार्द्धं सम्बन्धलक्षणो बन्धनपरिणामो नारकाणां ज्वलद्वह्नियोगादप्यतिदारुणः १ ॥ गतिरुष्ट्रादेरिव, सापि तप्तलोहपदन्यासतोऽप्यत्यन्ततीव्रा २ ॥ संस्थानमत्यन्तहुण्डं लूनपक्षाण्डजनिभं, दृष्टमात्मनोऽप्युद्वेजकं ३ ॥ भेदः कुड्यादिभ्यः पुद्गलानां विघटनं, सोऽपि शस्त्रधारानिपातोपमः ४ ॥ वर्णः सर्वनिकृष्टो विभीषणः, नरकावासा ह्यविद्यमानद्वाराः सर्वतो नित्यान्धकारा विण्मूत्रश्लेष्मस्रोतोमलरक्तवसामेदपूयलिप्ततलाः श्मशानवन्मांसकेशास्थिनखदन्तचर्मास्तीर्णभुवश्चेति ५ ॥ गन्धः श्वशृगालाहिमार्जारनकुलादिमृतकवपुःक्वाथादप्यशुभः ६ ॥ रसो घोषातक्यादिनिस्स्यन्दादपि कटुः ७ ॥ स्पर्शो वृश्चिककपिकच्छ्वाः स्पर्शादप्यतिरौद्रः ८ ॥ अगुरुलघुपरिणामोऽप्यनेकदुःखाश्रयः ९ ॥ शब्दोऽपि सततं पीडयाक्रान्तानामत्यन्तार्त्तविलापरूपो महादुःखकारी १० ॥ तथान्याप्यागमे नारकाणां दशविधा वेदनोक्ता, यथा—"नेरइआणं भन्ते ! कइविहं वेअणं

पच्चणुहवमाणा विहरन्ति ? गो ! दसविहं, तंजहा—सीअं उसिणं खुहं पिवासं कण्डुं परज्झं जरं दाहं भयं सोगं" तत्र शीतोष्णे प्रागुक्ते, क्षुत्पुनर्नारकाणां सदावस्थायिनी, ते हि क्षुद्वह्निना दह्यमानाः सकलजगद्घृताद्दिपुद्गलाहारेऽपि न तृप्यन्ति, पिपासा तु नित्यं कण्ठौष्ठतालुजिह्वादिशोषविधायिनी, सकलजलधिजलपानेऽपि नोपशाम्यति, कण्डूः क्षुरिकादिभिरप्यनुच्छेद्या, परज्झं पारवश्यं, ज्वरो यावज्जीवमत्रत्यादनन्तगुणः, दाहभयशोका अप्यत्रत्येभ्योऽनन्तगुणाः । तथा विभङ्गज्ञानमपि सर्वतो दुःखकारकं, परमाधार्मिकापरनारकशस्त्रादिदर्शनान्महादुःखप्रदं । उक्ता क्षेत्रजा अथ परस्परजोच्यते—इह सम्यग्दृष्टिमिथ्यादृष्टिभेदात् द्विधा नारकाः, तत्र यथेह पल्ल्यादिश्वानः स्थानान्तरादागच्छतः शुनोऽवलोक्य क्रोधान्धाः ससंरम्भं युध्यन्ते, तथा मिथ्यादृष्टयोऽपि विभङ्गज्ञानतो दूरादन्योऽन्यमालोक्य ज्वलन्तः क्रोधवह्निना विधाय वैक्रियमतिभैरवं रूपं तेष्वेव स्वस्वनरकावासेषु क्षेत्रानुभावोत्पन्नैः पृथ्वीपरिणामरूपैर्विकुर्वितैर्वा शूलासिकुन्तादिभिः करचरणदन्तादिभिश्चान्योऽन्यमभिघ्नन्ति, ततोऽन्योऽन्याभिघाताद्विकृत्ताङ्गा गाढं निःस्वनन्तः सूनान्तर्महिषादय इव रक्तकर्दमे वेल्लन्ते, सम्यग्दृष्टयस्तु 'नूनमस्माभिः कृतं जन्मान्तरेऽपि किमपि पापं येन वयं निमग्नाः परमदुःखाम्भोधा'विति विभावयन्तः सम्यक् सहन्ते परोदीरितानि दुःखानि, न पुनरन्येषामुत्पादयन्ति, दृष्टविपाकत्वात् । अत एवैषां सम्यग्दृष्टिमिथ्यादृशां भगवत्यामष्टादशे शते पञ्चमोद्देशके वेदनाकृतो विशेषो यथा—"नेरइआ दुविहा पन्नत्ता, तंजहा—माइमिच्छदिट्ठिउववन्नगा य अमाइ-

सम्मद्दिट्ठिउववन्नगा य। तत्थ णं जे से माइमिच्छद्दिट्ठी से णं महाकम्मतराए चेव जाव महावेअणतराए चेव। तत्थ णं जे से अमाइसम्मद्दिट्ठी से णं अप्पकम्मतराए चेव जाव अप्पवेअणतराए चेव" त्ति। मनोदुःखभूयिष्ठ-
तया तु मिथ्यादृष्टिभ्यः प्रभूतदुःखाः सम्यग्दृष्टयः, तथा च भगवत्यामेव प्रथमे शते द्वितीयोद्देशके—"नेरइआणं
भन्ते! सव्वे समवेअणा? गोयमा! नो इणट्ठे समट्ठे। से केणट्ठेणं? गोअमा! नेरइआ दुविहा पन्नत्ता, तं—सन्निभूआ य
असन्निभूआ य, तत्थ णं जे ते सन्निभूआ ते णं महावेअणा, तत्थ णं जे ते असन्निभूआ ते णं अप्पवेअणतरागा"
अत्र सन्निभूअत्ति संज्ञा—सम्यग्दर्शनं तद्वन्तो भूता, यद्वा पूर्वभवे संज्ञिपञ्चेन्द्रियाः सन्तो नारकत्वं प्राप्ताः, अथवा
संज्ञिभूताः पर्याप्तकीभूताः, तद्विपरीताः सर्वत्रासंज्ञिभूताः। उक्ता परस्परजा परमाधार्मिककृता तु तप्तत्रपुपानतप्ता-
योमयस्त्रीसमालिङ्गनकूटशाल्मल्यग्रारोपणायोघनघातवास्यादितक्षणक्षतक्षारोष्णतैलनिक्षेपकुन्तादिप्रोतनभ्राष्ट्रभर्जनय-
न्त्रपीडनक्रकचपाटनवैक्रियानेककाकोलूकसिंहादिकदर्थनतप्तवालुकावतारणासिपत्रवनप्रवेशनवैतरणीनदीप्लावनपर-
स्परायोघनादिजनिता विविधा श्रुतेऽभिधीयते। किञ्च—कुम्भीषु पच्यमानास्तीव्रतापान्नारका उत्कर्षतः पञ्चयोजन-
शतान्यूर्ध्वमुच्छलन्ति। तथा च सूत्रकृताङ्गचूर्णिः—"नेरइआणुप्पाओ, उड्ढं पञ्चेव जोअणसयाइं" इति, तथा तत्त्व-
निर्णयाम्भोधिजीवाभिगमोऽप्याह—नेरइआणुप्पाओ, उक्कोसो पञ्चजोअणसयाइं। दुक्खेणाभिहुआणं, वेअणसयसं-
पगाढाणं ॥ १ ॥" इति, पतन्तश्च विकुर्वितैर्वज्रतुण्डैः पक्षिभिस्त्रोट्यन्ते, किञ्चिच्छेपास्तु भूपतिता व्याघ्रादिभिर्वि-

तुष्यन्ते । ते हि परमाधार्मिकाः पापाभिरताः क्रूरक्रियाः क्रूरपञ्चाग्न्यादिक्रियाऽवासक्रूरसुरत्वाः स्वयमन्यैरन्योऽन्यं च कदर्थ्यमानान्नारकान् दृष्ट्वा तान्छील्यादिहत्यमेषमहिषकुकुटादियुद्धप्रेक्षकनरा इव हृष्यन्ति । हृष्टाश्चाट्टहासं चेलोत्क्षेपं त्रिपद्यास्फालनादि च कुर्वन्ति । किं बहुना ? यथैषामित्थं प्रीतिर्न तथात्यन्तरम्ये प्रेक्षणादाविति ॥१६२॥

अथैतासां तिसृणां वेदनानां मध्याद्या यस्यां पृथिव्यां भवत्येतदाह—

सत्तसु खेत्तजविअणा, अन्नोन्नकयावि पहरणेहिँ विणा ।
पहरणकयावि पंचसु, तिसु परमाहम्मिअकयावि ॥ १६३ ॥

व्याख्या—क्षेत्रजा-क्षेत्रसमावोद्भूता दुःखवेदना तावदविशेषेण सप्तस्वपि पृथिवीषु भवति, अन्योऽन्यकृता तु द्वेधा-शरीरतः प्रहरणतश्च, तत्र प्रहरणैर्विना शरीरमात्रेणान्योऽन्यकृतापि सप्तस्वपि, पञ्चसु पुनराद्यासु प्रहरणकृतापि, तथा तिसृष्वाद्यासु परमाधार्मिककृतापि । तथा जीवाभिगमोपाङ्गम्—"इमीसे णं भंते ! रयणप्पभाए पुढवीए नेरइआ जाव एगत्तंपि पहू विउव्वित्तए, बहुत्तंपि पहू विउव्वित्तए । एगत्तं विउव्वेमाणा एगं महं मुग्गररूवं वा, मुसुण्ढिरूवं वा, एवं करवत्तअसिसत्तिहलगयामुसलचक्कनारायकुन्ततोमरसूललगुडजावभिण्डिमालरूवं वा ।

पहुत्तं विउव्वेमाणा मुग्गररूवाणि वा, जाव भिण्डिमालरूवाणि वा, ताइं संखेज्जाइं नो असंखिज्जाइं, संबद्धाइं नो असंबद्धाइं, सरिसाइं नो असरिसाइं विउव्वंति, विउव्वित्ता अन्नमन्नस्स कायं अभिभवमाणा २ वेअणं उईरयन्ति, एवं जाव धूमप्पभाए पुढवीए । छट्ठसत्तमासु णं पुढवीसु नेरइआ महंताइं लोहिअकुंथुरूवाइं वइरामयतुंडाइं गोमयकीडसमाणाइं विउव्वित्ता अन्नमन्नस्स कायं समतुरंगेमाणा २ खाएमाणा २ सयपोराकिमिआ इव दालेमाणा अंतो २ अणुपविसमाणा वेअणं उईरयंति''त्ति, अत्रासंख्यानां स्वशरीरात् पृथग्भूतानां विसदृशानां च प्रहरणानां विकुर्वणे शक्त्यभावः, तथाभवस्वाभाव्यात् । 'समतुरङ्गेमाणा २' इति समतुरङ्गायमाणा अश्वा इवान्योऽन्यमारोहन्त इत्यर्थः । शतपर्वक्रमय इवेक्षुकृमयः ( इव ), इह च सामान्येन षष्ठीं यावदन्योऽन्योदीरितेति केचित् । यदाह—"सत्तसु खेत्तसहावा, अन्नोन्नोदीरिआ य जा छट्ठिं । तिसु आइमासु विअणा, परमाहम्मिअसुरकया य ॥ १ ॥" एतन्निबन्धनं च नावगच्छाम इत्यलं विस्तरेण ॥ १६३ ॥

उक्तं सप्रपञ्चं नारकाणां स्थितिद्वारम्, अथैषामेव भवनद्वारं विवक्षुः पृथ्वीनां तावद्गोत्राण्याह—

रयणप्पह सक्करपह, वालुअपह पंकपह य धूमपहा ।
तमपह तमतमपहा, कमेण पुढवीण गोत्ताइं ॥ १६४ ॥

सुगमा, नवरं गावस्त्रायन्त इति गोत्राणि, नामान्येव सान्वयानि । तद्यथा–रत्नानि वज्रादीनि, प्रभाशब्दोऽत्र रूपवाची बाहुल्यवाची च, ततो रत्नानि प्रभा–रूपं स्वभावो रत्नानां वा प्रभा–बाहुल्यं यस्यां सा रत्नप्रभा, रत्नरूपा रत्नमयी रत्नबहुलेत्यर्थः । तद्बाहुल्यं च खरकाण्डगतप्रथमरत्नकाण्डापेक्षं, तथाहि–अस्यां षोडश योजनानां सहस्राः प्रथमं खरकाण्डं, चतुरशीतिर्द्वितीयं पङ्कबहुलकाण्डं, अशीतिस्तृतीयं जलबहुलकाण्डमिति । शेषास्तु पृथिव्यः सर्वा अपि पृथ्वीस्वरूपाः, केवलं शर्कराप्रभा शर्कराबहुलेत्यादिनामानुसारतोऽन्वर्थो भावनीयः यावत्तमस्तमस्य प्रकृष्टतमसस्तमस्तमसो वाऽत्यन्ततमसः प्रभा–बाहुल्यं यस्याः सा तमस्तमप्रभा तमस्तमःप्रभा चेति, उक्तं च—"तत्थ सहस्सा सोलस खरकण्डं पङ्कबहुलकण्डं तु। चुलसीइ सहस्साइं, असीइ जलबहुलकंडं तु ॥ १ ॥ एवं असीइलक्खो, खरकंडाईहिं घम्मपुढवीए । सेसा पुढवीसरूवा, पुढवीओ हुंति बाहुल्ले ॥ २ ॥" इति ॥ १६४ ॥

पृथ्वीनामेव नामानि संस्थानं चाह—

> घम्मा वंसा सेला, अंजण रिट्ठा मघा य माघवई ।
> नामेहिं पुढवीओ, छत्ताइच्छत्तसंठाणा ॥ १६५ ॥

सुगमा–नवरं नामानि निरन्वयाः संज्ञाः, तथा सप्तापि पृथिव्यः समुदितास्छत्रमतिक्रम्य छत्रं छत्रातिच्छत्रं

तत्संस्थानाः। तथाहि—उपरि च्छत्रं लघु तस्याधो महत्ततोऽप्यधो महत्तरं, एवमेता अप्यधोऽधो महाविस्तराः॥१६५॥

पृथ्वीनां पिण्डमाश्रयं चाह—

असिइ बत्तीसडवीस वीस अट्ठार सोल अड सहसा।
लक्खुवरि पुढविपिंडो, घणुदहिघणवायतणुवाया ॥ १६६ ॥
गयणं च पइट्ठाणं, वीस सहस्सा य घणउदहिपिंडो।
घणतणुवायागासा, असंखजोअणजुआ पिंडे ॥ १६७ ॥ युग्मम्॥

व्याख्या—प्रमाणाङ्गुलेनैकैकलक्षस्योपरि क्रमादशीतिर्द्वात्रिंशत् अष्टाविंशतिर्विंशतिरष्टादश षोडश अष्टौ च योजनसहस्राः, पृथ्वीनां सप्तानामपि पिण्डः—स्थूलत्वं। तथा घनोदधिघनवाततनुवाता गगनं च सप्तानामपि पृथ्वीनां प्रत्येकं प्रतिष्ठानम्—आश्रयः, तत्र घनोदधिघनवातौ प्राग्व्याख्यातौ, तनुवातगगने तु प्रतीते, तत्रानन्तरं घर्म्मा घनोदधौ प्रतिष्ठिता, स घनवाते, सोऽपि तनुवाते, तनुवातोऽप्याकाशे, आकाशं च स्वस्मिन्नेव प्रतिष्ठितम्, एवं शेषपृथिव्योऽपि, सप्तस्वपि च पृथ्वीषु घनोदधीनां पिण्डस्थूलत्वं मध्यभागे विंशतिर्योजनसहस्राणि, घनवाततनु-

लुप्यन्ते । ते हि परमाधार्मिकाः पापाभिरताः क्रूरक्रियाः क्रूरपञ्चाग्न्यादिक्रियाऽवामकस्यगत्वाः [illegible]

वाताकाशास्तु पिण्डे मध्यभागवर्त्तिन्यसंख्यातयोजनात्मकप्रमाणयुताः, तत्रापि घनोदधेर्घनवातोऽसंख्यातगुणः, घनवातादसंख्यगुणस्तनुवातः, ततोऽप्यसंख्यगुणमाकाशमिति ॥ १६६–१६७ ॥

अथैता धर्माद्याः पृथिव्यः किंमायामविष्कम्भाभ्यामलोकं स्पृशन्ति नवेत्यत आह—

न फुसंति अलोगं चउदिसिंपि पुढवीउ वलयसंगहिआ ।

व्याख्या—नैव स्पृशन्त्यलोकं चतसृष्वपि दिक्षु सप्तापि पृथिव्यो, यतो वलयैर्घनोदधिघनवाततनुवातसत्कैः 'संगृहीता' वेष्टिताः, तथाहि—सप्तस्वपि पृथ्वीष्वधः सर्वमध्यभागे घनोदध्यादयो यथोक्तबाहल्यास्ततः प्रदेशहान्या हीयमाना हीयमानाः स्वस्वपृथिव्यन्तेषु तनुतरा भूत्वा स्वां स्वां पृथ्वीं वलयाकारेणावृत्य स्थिताः, तत्रैषां घनोदध्यादिवलयानामुच्चत्वं सर्वत्र स्वस्वपृथिव्यनुसारेण ज्ञेयं, विष्कम्भं तु सार्द्धगाथाद्वयेनाह—

सार्द्धं ॥ १६८ ॥

रयणाए वलयाणं, छधपंचमओअणं सड्ढं ।
विक्खंभो घणउदहीघणतणुवायाण होइ जहसंखं ।
सतिभागगाउअं गाउअं च तह गाउअतिभागो ॥ १६९ ॥

पढममहीवलएसुं, खिवेज्ज एअं कमेण बीआए ।
दुतिचउपंचच्छगुणं, तइआइसु तंपि खिव कमसो ॥ १७० ॥

व्याख्या—रत्नप्रभायाः पृथिव्या उपरितलसमश्रेणिस्थितघनोदधिघनवाततनुवातवलयानां विष्कम्भो-विस्तारो भवति । यथासंख्यं-षड् योजनानि, अर्द्धपञ्चमानि योजनानि, सार्द्धं योजनं चेति । ततः परमलोकः । एष्वेव त्रिषु प्रथमपृथ्वीवलयेषु ध्रुवेषु यथासङ्ख्यं क्षिपेदेतत् । क्षेप्यमेव दर्शयति-सत्रिभागं-त्रिभागाधिकं गव्यूतं, योजनत्रिभाग इत्यर्थः, तथा पूर्णं गव्यूतं, तथा गव्यूतत्रिभागो, योजनस्य द्वादशो भाग इत्यर्थः । ततो द्वितीयस्याः शर्कराप्रभाया वलयानां विष्कम्भो भवति, तद्यथा-घनोदधिवलये षड् योजनानि योजनस्य च त्रिभागः, घनवाते पञ्च पादोनानि, तनुवाते योजनमेकं सप्त च द्वादशभागा योजनस्य । तथा तृतीयादिषु पञ्चसु पृथ्वीषु यद् द्वितीयस्यां क्षिप्तं तदेव द्वित्रिचतुःपञ्चषड्गुणसुकृतध्रुवकेषु क्रमशो यथासङ्ख्यं क्षिप्यते, ततो वालुकादीनां वलयविष्कम्भो भवति । इत्थं च प्रक्षेपे द्वितीयादिषु पृथ्वीषु यज्जातं घनोदध्यादिवलयविष्कम्भमानं तद्भावनार्थं स्पष्टाः शास्त्रान्तरगाथा इमाः 'छस्सतिभाग पउणा य पंच वलयाण जोअणपमाणं । एगं बारसभागा, सत्त कमा बीअपुढवीए । १ । जोअण सत्ततिभागूण, पंच एगं च वलयपरिमाणं । बारसभागा अट्ठ उ, तइआए जहक्कमतोऽअं ॥ २ ॥ सत्त सवाया पंच

उ, पउणा दो जोअणा चउत्थीए । घणउदहिमाइआणं, वलयाणं माणमेयं तु ॥ ३ ॥ सतिभागसत्त तह अद्ध-छट्ठ वलयाण माणमेअं तु । जोअणमेगं बारसभागा दस पंचमीएँ तहा ॥ ४ ॥ अट्ठ तिभागूणाइं, पउणाइं छच्च वलयमाणं तु । छट्ठीए जोअणं तह, बारसभागा य इक्कारा ॥ ५ ॥ अट्ठ य छच्चिअ दोन्नि अ, घणोदहीमाइआण वलयमाणं तु । सत्तमसहीएँ नेअं, जहासंखेण तिण्हंपि ॥ ६ ॥" एवं रत्नप्रभायाः सर्वासु दिक्षु तिर्यग् द्वादशभिर्योजनैरलोकः, एवं द्वितीयस्यास्त्रिभागोनैस्त्रयोदशभिः, तृतीयस्याः सत्रिभागैस्त्रयोदशभिः, चतुर्थ्याश्चतुर्दशभिः, पञ्चम्यास्त्रिभागोनैः पञ्चदशभिः, षष्ठयाः सत्रिभागैः पञ्चदशभिः, सप्तम्याः पूर्णैः षोडशभिरिति ॥ १६८–१६९–१७० ॥

अथ 'वीससहस्साइं घणउदहिपिण्डो' इत्यादि उक्तं, ततः कथमेतावदेवात्र वलयमानमत आह–

मज्झे च्चिअ पुढवि अहे, घणुदहिपमुहाण पिंडपरिमाणं ।
भणिअं तओ कमेणं, हायइ जा वलयपरिमाणं ॥ १७१ ॥

भावितार्था । सम्प्रति प्रतिपृथिवि नरकावाससङ्ख्यामाह—

तीस पणवीस पनरस, दस तिन्नि पणूणएग लक्खाइं ।

पंच य नरया कमसो, चुलसी लक्खाइँ सत्तसु वि ॥ १७२ ॥

व्याख्या—नरका-नारकाणामावासाः, क्रमशः सप्तस्वपि पृथिवीषु, त्रिंशल्लक्षादयः, तथाहि-प्रथमायां पृथिव्यां त्रिंशल्लक्षाणि, एवं द्वितीयस्यां पञ्चविंशतिः, तृतीयस्यां पञ्चदश, चतुर्थ्यां दश, पञ्चम्यां त्रीणि, षष्ठ्यां पञ्चोनं लक्षमेकं, सप्तम्यां पञ्चैवानुत्तराः सर्वाधोवर्त्तिनो नरकावासाः, ते च पञ्चैवम्-'पुव्वेण होइ काळो, अवरेणं अप्पइट्ठ महकालो । रोरू दाहिणपासे, उत्तरपासे महारोरू ॥ १ ॥' अत्र 'अप्पइट्ठत्ति अप्रतिष्ठानात् । तथैते सप्तस्वपि पृथ्वीषु मीलिताश्चतुरशीतिर्लक्षाणि ॥ १७२ ॥

अथ सप्तस्वपि पृथ्वीषु क्रमाद्देशमभूमिकारूपाणां प्रतराणां सङ्ख्यां प्रतरगतान्नरकेन्द्रकांश्चाह—

तेरिक्कारसनवसगपणातिन्निग पयर सव्वि गुणवन्ना ।
सीमंताई अपइट्ठाणंता इंदया मज्झे ॥ १७३ ॥

व्याख्या—सप्तस्वपि पृथ्वीषु क्रमेणैषा प्रतरसङ्ख्या, यथाऽऽद्यायां पृथिव्यां त्रयोदश, द्वितीयस्यामेकादश, तृतीयस्यां नव, चतुर्थ्यां सप्त, पञ्चम्यां पञ्च, षष्ठ्यां च त्रयः, सप्तम्यामेकः, सर्वेऽप्येते मिलिता एकोनपञ्चाशत् । एषु च सीमन्ताद्या अप्रतिष्ठानान्ता एकोनपञ्चाशदेव मध्ये इन्द्रका भवन्ति । तन्नामगाथाश्चेमाः-"सीमंतउत्थ पढमो,

बीओ पुण रोरुअत्ति नायव्वो । भंतो उणत्थ तइओ, चउत्थओ होइ उब्भंतो ॥ १ ॥ संभंतमसंभंतो, विब्भंतो चेव सत्तमो निरओ । अट्ठमओ तत्तो पुण, नवमो सीउत्ति नायव्वो ॥ २ ॥ वक्कंतमवक्कंतो, विक्कंतो चेव रोरुओ निरओ । पढमाए पुढवीए, तेरस निरइंदया एए ॥३॥ थणिए थणए अ तहा, मणए वणए अ होइ नायव्वो । घट्टे तह संघट्टे, जिब्भे अवजिब्भए चेव ॥ ४ ॥ लोले लोलावत्ते, तहेव थणलोलुए अ बोद्धव्वे । बीआए पुढवीए, इक्कारस इंदया एए ॥ ५ ॥ तत्तो तविओ तवणो, तावणो पंचमो निदाघो अ । छट्ठो पुण पज्जलिओ, उज्जलिओ सत्तमो निरओ ॥ ६ ॥ संजलिओ अट्ठमओ, संपज्जलिओ अ नवमओ भणिओ । तइआए पुढवीए, एए नव होंति नरइंदा ॥ ७ ॥ आरे तारे मारे, वच्चे तमए अ होइ नायव्वे । खाडखडे अ खडखडे, इंदयनिरया चउत्थीए ॥ ८ ॥ खाए तमए अ तहा, झसे य अंधे अ तहय तिमिसे अ । एए पंचमपुढवीएँ, पंच निरइंदया होंति ॥ ९ ॥ हिम वद्दल लल्लके, तिन्नि उ निरइंदया उ छट्ठीए । एक्को अ सत्तमीए, बोद्धव्वो अप्पइट्ठाणो ॥ १० ॥ " ॥ १७३ ॥

अथैतेभ्यो नरकेन्द्रकेभ्यो यावत्य आवलिका निर्गतास्तासु प्रत्येकं यावन्तो नरकावासास्तदेतद्गाथाद्वयेनाह–

तेहिंतो दिसिविदिसिं, विणिग्गया अट्ठ नरयआवलिआ ।
पढमे पयरे दिसि इगुणवन्न विदिसासु अडयाला ॥ १७४ ॥

बीआइसु पयरेसुं, इगेगहीणाओ हुंति पंतीओ ।
जा सत्तममहिपयरे, दिसि एक्केक्को विदिसि नत्थि ॥ १७५ ॥

व्याख्यातम् । अथ प्रतिप्रतरं सकलदिग्विदिग्गतावलिकाप्रविष्टनरकावाससङ्ख्याज्ञानाय सपादगाथया करणमाह—

इट्ठपयरेगदिसिसंख, अडगुणा चउविणा सइगसंखा ।
जह सीमंतयपयरे, एगुणनउआ सया तिन्नि ॥ १७६ ॥
अपइट्ठाणे पंच उ ।

व्याख्या—'इष्टस्य' विवक्षितस्य प्रतरस्य एकस्यां दिशि या नरकावाससङ्ख्या सा आवलिकाष्टकापेक्षया अष्टगुणा, विदिगावलिकानामेकैकोनत्वाच्चतुर्भिरूना, मध्ये चैकस्येन्द्रकस्य सद्भावादेकरूपसहिता च सती भवति विवक्षिते प्रतरे सकलदिग्विदिग्गतावलिकाप्रविष्टनरकावासानां सङ्ख्या, यथा—रत्नप्रभायां प्रथमे प्रतरे एकस्यां दिशि नरकावाससङ्ख्या एकोनपञ्चाशत्, सा अष्टगुणा त्रीणि शतानि द्विनवत्यधिकानि ३९२, तानि चतुर्भिरूनानि कृत्वा पुनरिन्द्रकलक्षणैकरूपसहितानि क्रियन्ते, जातानि त्रीणि शतान्येकोननवत्यधिकानि ३८९ । एतावन्तो रत्नप्रभा-

याभाद्ये प्रतरे आवलिकागता नरकावासाः, द्वितीये तु प्रतरेऽनेनैव प्रकारेणागता आवलिकाप्रविष्टा नरकावासास्त्रीणि शतान्येकाशीत्यधिकानि ३८१, एवं यावदेकोनपञ्चाशत्तमेऽप्रतिष्ठानोपलक्षिते प्रतरे एकस्यां दिशि एको नरकावासः, सोऽष्टभिर्गुणितोऽष्टौ चतुःपातने इन्द्रकप्रक्षेपे च जाताः पञ्च, एतावन्तस्तत्रावलिकानरकावासाः ॥ १७६ ॥ साम्प्रतं समस्तपृथ्वीष्वेकैकस्यां वा पृथिव्यामावलिकाप्रविष्टनरकावाससंख्याज्ञानाय करणं विवक्षुः पादोनां गाथामाह—

पढमो मुहमंतिमो हवइ भूमी । मुहभूमिसमासद्धं, पयरगुणं होइ सव्वधणं ॥ १७७ ॥

व्याख्या—प्रथमः-सीमन्तकनरकेन्द्रकोपलक्षितः प्रथमप्रतरगतो नरकावाससमूहस्त्रीणि शतान्येकोननवत्यधिकानि ३८९ मुखं, अन्तिमः—एकोनपञ्चाशत्तमप्रतरगतः पञ्चसङ्ख्यो नरकावाससमुदायो भूमिः, तयोः समासः—एकत्र मीलनं त्रीणि शतानि चतुर्णवत्यधिकानि ३९४, तस्यार्द्धं सप्तनवतिशतं १९७, तत्प्रतरैरेकोनपञ्चाशत्सङ्ख्यैर्गुण्यते जातानि षण्णवतिशतानि त्रिपञ्चाशदधिकानि ९६५३, एतावन्तः सर्वासु पृथ्वीष्वावलिकाप्रविष्टा नरकावासाः, शेषास्त्र्यशीतिर्लक्षाः नवतिः सहस्राणि त्रीणि शतानि सप्तचत्वारिंशदधिकानि पुष्पावकीर्णाः ८३९०३४७ ॥ १७७ ॥

एतदेवाह—

छन्नवइ सय तिपन्ना, सत्तसु पुढवीसु आवलीनरया ।

सेस तिआसीइ लक्खा, तिसयसिआला नवइ सहसा ॥ १७८ ॥

उक्तार्थो, नवरमुभये चतुरशीतिर्लक्षाः ८४००००० ॥ अथोक्तकरणस्य प्रतिपृथिवि आवलिकाप्रविष्टनरकावाससङ्ख्यावबोधाय भावना यन्त्रकेण दर्श्यते । तस्य स्थापना, तथा चोक्तम्–"तिन्नि सय अउणनआ, दो तेणउआ य हुंति पढमाए । दोसय पंचासीआ, पंचोत्तर दोन्नि बीआए ॥१॥ सत्ताणउअं च सयं, तेत्तीससयं सयं च पणवीसं । सत्तत्तरि अउणत्तरि, सत्तत्तीसा य गुणतीसा ॥ २ ॥ तेरस मुहभूमीओ' इति, तथा—सत्तट्ठी पंच सया, पणनवइ सहस्स लक्ख गुणतीसं । रयणाए सेढिगया, चोआलसया उ तेत्तीसा ॥ १ ॥ सत्ताणउइ सहस्सा, चउवीसं लक्ख तिसय पंचहिआ । बीआए सेढिगया, छवीस सया उ पणनउआ ॥ २ ॥ पंचसया पन्नरसा, अडनउइ सहस्स लक्ख चोद्दस य । तइआए सेढिगया, पणसीता चोद्दस सया उ ॥ ३ ॥ तेणउआ दुन्नि सया, नवनउइ सहस्स नव य लक्खा य । पंकाए सेढिगया, सत्त सया होंति सत्तहिआ ॥४॥ सत्तसया पणतीसा, नवनउइ सहस्स दो य लक्खा य । धूमाए सेढिगया, पन्नट्ठी दो सया हुंति ॥ ५ ॥ नवनउई अ सहस्सा, नव चेव सया हवंति बत्तीसा । पुढवीए छट्ठीए, सेढिगया हुंति तेवट्ठी ॥६॥ तमस्तमःप्रभायां तु दिक्ष्वेव एकैकस्य भावातपञ्चैवावलिकाप्रविष्टा नरकावासाः। सर्वेऽपि चैतेऽन्तर्वृत्ता बहिश्चतुरस्राः । तथाच गुरवः–"तेणं नरगावासा, अंतो वट्टा बाहिं तु चउरंसा । हिट्ठा

खुरप्पसंठाणसंठिआ परमदुग्गंधा ॥ १ ॥ " अत्र 'खुरप्पसंठाणत्ति' भूमितले मसृणत्वाभावतः शर्करिले न्यस्यमानाः पादाः शर्करामात्रस्पर्शेऽपि क्षुरप्रेणेव प्रहरणविशेषेण कृत्यन्त इति वृद्धाः, सकलपीठाद्यपेक्षया त्वावलिकाप्रविष्टाः प्रागुक्तवैमानिकविमानन्यायेन वृत्तत्र्यस्रचतुरस्रसंस्थानाः, पुष्पावकीर्णास्त्वनेकसंस्थानाः । तत्र चेन्द्रकाः सर्वेऽपि वृत्तास्तेभ्योऽनन्तरमावलिकागताः सर्वेऽपि त्र्यस्रास्ततोऽपि चतुरस्रास्ततोऽपि वृत्ताः, एवं यावदावलिकापर्यन्तः, प्रतिपृथिवि वृत्तादिसङ्ख्याप्रपञ्चस्तु देवेन्द्रकनरकेन्द्रकाद्बोद्धव्यो, ग्रन्थगौरवभयाच्च नेहोच्यत इति ॥ १७८ ॥

अथ नरकावासानामायामविष्कम्भोच्चत्वान्याह—

तिसहस्सुच्चा सव्वे, संखमसंखिज्जवित्थडायामा ।
पणयाल लक्ख सीमंतओ अ लक्खं अपइठाणो ॥ १७९ ॥

व्याख्या—सर्वे–पृथ्वीसप्तकसम्बन्धिनो नरकावासास्त्रिसहस्रोच्चाः, पीठे शुषिरे स्तूपिकायां च एकैकसहस्रभावात् । यदुक्तम्–"हिट्ठा घणो सहस्सं, उप्पिं संकोयओ सहस्सं तु । मज्झे सहस्सझुसिरा, तिन्निसहस्सूसिआ निरया ॥ १ ॥" विस्ताराद्-दैर्घ्याच्च संख्यातयोजना असङ्ख्यातयोजना वा, प्रथमप्रतरवर्त्ती सीमन्तकः पुनरायामविष्कम्भाभ्यां योजनानां पञ्चचत्वारिंशल्लक्षाः, एवमप्रतिष्ठानः सप्तमपृथिवीनरकेन्द्रको लक्षं, तथा एतत्परिक्षेपि-

णश्चत्वारः कालादयो विष्कम्भायामपरिधिभिरसङ्ख्यातयोजनकोटीकोटीप्रमाणाः ॥ १७९ ॥ अथ ते नरकावासाः पृथ्वीषु सर्वत्र सन्त्यन्यथा वेत्यत आह—

छसु हिट्ठोवरि जोअणसहस्सं बावन्न सड्ढ चरमाए ।
पुढवीएँ नरयरहियं, नरया सेसंमि सव्वासु ॥ १८० ॥

व्याख्या—षट्सु पृथ्वीष्वध ऊर्ध्वं च प्रत्येकं योजनसहस्रं, चरमायामध उपरि च सार्द्धानि द्विपञ्चाशद्योजनसहस्राणि, एतावत्क्षेत्रं नरकावासरहितं, शेषे तु क्षेत्रविभागे यथासम्भवं सर्वास्वपि पृथ्वीषु सन्ति नरकावासाः ॥१८०॥

उक्ता प्रतरगता नरकावासवक्तव्यता, अथ प्रतराणामेवान्तरमाह—

बिसहस्सूणा पुढवी तिसहस्सगुणिएहिं निअयपयरेहिं ।
ऊणा रूवूणनिअपयरभाइआ पत्थडंतरयं ॥ १८१ ॥

व्याख्या—एकैका पृथिवी बाहल्यमाश्रित्य द्विसहस्रोना—योजनसहस्रद्वयहीना क्रियते, अध उपरि च प्रत्येकं योजनसहस्रस्य नरकहीनत्वात् । ततो यत्र पृथिव्यां यावन्तः प्रतरास्तावद्भिः प्रतरैर्योजनसहस्रत्रयोच्चत्वात् त्रिस-

हस्रगुणितैरूना कर्तव्या । ततः प्रतरापेक्षया अन्तराणामेकोनत्वाद्रूपोनैः स्वस्वप्रतरैर्भागे हृते यदागच्छति तत्प्रस्तरस्य प्रस्तरस्यान्तरं भवति, तथाहि—रत्नप्रभाया बाहल्यमशीतियोजनसहस्राधिकं लक्षं, तच्चोपरितनेनाधस्तनेन च योजनसहस्रेण हीनं क्रियते, जातमष्टसप्ततिसहस्राधिकं लक्षं, तत एतस्मात्त्रयोदश प्रतराः त्रिसहस्रगुणिता एकोनचत्वारिंशत्सहस्ररूपा अपनीयन्ते, स्थितमेकोनचत्वारिंशत्सहस्राधिकं लक्षं, तस्य स्वप्रतरै रूपोनत्वात् द्वादशभिर्भागे हृते लब्धमेकादश योजनसहस्राः पञ्च शतानि त्र्यशीत्यधिकानि ११५८३, शेषं चत्वारि योजनानि, चत्वारो द्वादशभागा योजनस्य, छेद्यच्छेदकराश्योश्चतुर्भिरपवर्त्तने लब्धो योजनस्य त्रिभागः, एतावत्प्रमाणं रत्नप्रभायां प्रतराणां परस्परमन्तरं । तथा चोक्तम्—"तेसीआ पंचसया, एक्कारस चेव जोअणसहस्सा । रयणाए पत्थडंतरमेगो च्चिअ जोअणतिभागो ॥ १ ॥" एवं शेषास्वपि करणं भावनीयं, केवलमागतमुपदर्श्यते—"सत्ताणउइ सयाइं, बीआए पत्थडंतरं होइ ९७०० । पणसत्तरि तिन्नि सया, बारस य सहस्स तइआए १२३७५ ॥ १ ॥ छावट्ठसयं सोलससहस्स पंकाए दो तिभागा य १६१६६ २/३ । अड्डाइज्ज सयाइं, पणवीस सहस्स धूमाए २५२५० ॥ २ ॥ बावन्न सहस्साइं, पंचेव हवन्ति जोअणसयाइं । पत्थडंतरमेअं तु, छट्ठपुढवीएँ नेअव्वं ५२५०० ॥ ३ ॥" सप्तम्यां त्वेक एव प्रतर ( प्रस्तट ) इति न तत्रान्तरसम्भव इति ॥ १८१ ॥

उक्तं नारकाणां सप्रसङ्गं भवनद्वारं, सम्प्रत्येषामेव अवगाहनाद्वारमाह—

पउणट्ठधणु छअंगुल, रयणाए देहमाणमुक्कोसं ।
सेसासु दुगुणदुगुणं, पण धणुसय जाव चरिमाए ॥ १८२ ॥

व्याख्या—रत्नप्रभायां नारकाणामुत्कृष्टं देहोच्चत्वमानं पादोनान्यष्टौ धनूंषि षट् चाङ्गुलानि, शेषासु षट्स्वेतदेव द्विगुणद्विगुणं भवति, यावत्सप्तम्यामुत्कृष्टं देहमानं पञ्च धनुःशतानि, तथाहि—रत्नप्रभायां सप्त धनूंषि त्रयो हस्ताः षट् चाङ्गुलानि, शर्करायां पञ्चदश धनूंषि द्वौ हस्तौ द्वादश चाङ्गुलानि, वालुकायामेकत्रिंशद्धनूंषि एको हस्तः, पङ्कायां द्वाषष्टिर्धनूंषि द्वौ हस्तौ, धूमायां पञ्चविंशं धनुःशतं, तमःप्रभायां सार्द्धे द्वे धनुःशते, तमस्तमःप्रभायां पञ्च धनुःशतानि ॥ १८२ ॥ उक्तमोघतः सप्तस्वपि पृथ्वीषूत्कृष्टं शरीरमानम्, अथैतदेव प्रतिप्रतरं विवक्षुः, प्रथमं रत्नप्रभायामाह—

रयणाएँ पढमपयरे, हत्थतिअं देहमाणमणुपयरं ।
छप्पन्नंगुल सड्ढा, वुड्ढी जा तेरसे पुण्णं ॥ १८३ ॥

व्याख्या—रत्नप्रभायाः प्रथमे प्रतरे उत्कर्षतो देहमानं त्रयो हस्ताः, ततः परमनुप्रतरं-प्रतरे २ पूर्वपूर्वप्रतरगतदेहमानस्योपरि वृद्धिः सार्द्धानि षट्पञ्चाशदङ्गुलानि, द्वौ हस्तौ सार्द्धान्यष्टावङ्गुलानि चेत्यर्थः । यावत्त्रयोदशे प्रतरे यथोक्तं मानं पूर्णमिति ॥ १८३ ॥ त्रयोदशस्वपि प्रतरेषु क्रमेण स्थापना ॥

उक्तं रत्नप्रभायां प्रतिप्रतरं देहमानम्, अथ शर्करादिषु गाथात्रयेणाह—

जं देहपमाण उवरिमाए पुढवीएँ अंतिमे पयरे ।
तं चिअ हिट्ठिमपुढवीएँ पढमपयरंमि बोद्धव्वं ॥ १८४ ॥
तं चेगूणगसगपयरभइअं बीआइ पयरवुड्ढि भवे ।
तिकरतिअंगुल करसत्त अंगुला सड्ढगुणवीसं ॥ १८५ ॥
पण धणु अंगुल वीसं, पनरस धणु दुन्नि हत्थ सड्ढा य ।
बासट्ठिधणुह सड्ढा, पणपुढवी पयरवुड्ढि इमा ॥ १८५ ॥

व्याख्या—यदेवोपरितन्यां रत्नप्रभादिकायां पृथिव्यामन्तिमे प्रतरे उत्कृष्टं देहप्रमाणं तदेवाधस्तन्यामधस्तन्या शर्करादिकायां प्रथमे प्रतरे बोद्धव्यं। तच्च शर्करादिषु प्रथमप्रतरगतं मानमेकोनैः स्वप्रतरैर्भज्यते, भक्ते च यदागच्छति तत् शेषपृथ्वीगतद्वितीयादिप्रतरेषु वृद्धिर्भवेत् । सा च द्वितीयादिषु षष्ठपृथिव्यन्तासु पञ्चसु पृथिवीषु द्वितीयादिप्रतरगता क्रमेणेयं—त्रयो हस्तास्त्रीण्यङ्गुलानि, सप्त हस्ताः सार्द्धान्येकोनविंशतिरङ्गुलानि, पञ्च धनूंषि विंशतिर-

ङ्गुलानि, पञ्चदश धनूंषि सार्द्धौ द्वौ हस्तौ, सार्द्धानि द्वाषष्टिर्धनूंषि । तत्र शर्करायां किल प्रथमे प्रतरे सप्त धनूंषि त्रयो हस्ताः षट् चाङ्गुलानि, ततः सप्तभिर्धनुर्भिरष्टाविंशतिर्हस्ताः, उपरितनहस्तत्रयक्षेपे एकत्रिंशत्, तेषां सवर्णनार्थं चतुर्विंशत्या गुणने उपरितनाङ्गुलषट्कक्षेपे च जातान्यङ्गुलानि सप्त शतानि पंचाशदधिकानि ७५०, तेषां शर्करागतैः प्रतरैरेकोनत्वाद्दशभिर्भागे लब्धानि पञ्चसप्तत्यङ्गुलानि ७५, तेषां हस्तानयनाय चतुर्विंशत्या भागे लब्धास्त्रयो हस्तास्त्रीण्यङ्गुलानि, एषा शर्करायां पूर्वपूर्वप्रतरदेहमानस्योपरि प्रत्येकं शेषेषु द्वितीयादिषु दशसु प्रतरेषु वृद्धिः । एवमन्यास्वपि भावनीयं । सुखावबोधार्थं शर्करावालुकापङ्कधूमतमःप्रभासु यन्त्रकाणां स्थापना । तमस्तमःप्रभायां त्वेक एव प्रतर इति प्रतरगतवृद्धेरभावात्तस्मिन् यथोक्तानि पञ्चैव धनुःशतानीति ॥ १८४ ॥ १८५ ॥ १८६ ॥

उक्तं सप्तास्वपि पृथ्वीषु प्रतिप्रतरमुत्कृष्टं नारकदेहमानम्, अथोक्तनारकाणां उत्कृष्टदेहस्य स्वाभाविकतां दर्शयन्नुत्कृष्टोत्तरवैक्रियस्य द्विविधस्यापि च जघन्यस्य मानमाह—

इअ साहाविअदेहो, उत्तरवेउव्विओ य तद्दुगुणो ।
दुविहोवि जहन्न कमा, अंगुलअस्संखसंखंसो ॥ १८७ ॥

व्याख्या—'इति' उक्तप्रकारेण सप्तस्वपि पृथ्वीषु नारकाणा देहः स्वाभाविको भवधारणीयापरनामाभिहितः ।

उत्तरवैक्रियः पुनः सप्तस्वपि पृथ्वीषु तस्मात्—स्वाभाविकात् द्विगुणो, यथा—रत्नप्रभायां पञ्चदश धनूंषि सार्द्धौ च द्वौ हस्तौ, एवं यावत्सप्तम्यां धनुःसहस्रमिति । तदेतावता सर्वपृथ्वीषु स्वाभाविक उत्तरवैक्रियश्चोत्कृष्टो देह उक्तः, जघन्यस्तु सप्तस्वपि पृथ्वीषु द्विविधोऽपि स्वाभाविक उत्तरवैक्रियश्च क्रमादङ्गुलस्यासङ्ख्यातांशः संख्यातांशश्च । इयं च द्विविधापि जघन्यावगाहना उत्पत्तिसमये एव नान्यदा । केचित्तु जघन्यामुत्तरवैक्रियामप्यङ्गुलासंख्यातभाग-प्रमाणामाहुः, तन्न, यदागमः—"जहन्ने णं भवधारणिज्जा अंगुलस्स असंखिज्जइभागं, उत्तरवेउविआ अंगुलस्स संखिज्जइभागमिति" तथा—अनुयोगद्वारमूलटीकायां हरिभद्रसूरिः—"उत्तरवैक्रिया तु तथाविधप्रयत्नाभावादाद्य-समयेऽप्यङ्गुलसंख्येयभागमात्रैवेति" ॥ १८७ ॥

उक्तं नारकाणामवगाहनाद्वारम्, अथोपपातच्यवनविरहद्वारद्वयमाह—

सत्तसु चउवीस मुहू, सग पनरदिणेग दु चउ छम्मासा ।
उववायचवणविरहो, ओहे बारस मुहुत्त गुरू ॥ १८८ ॥
लहुओ दुहावि समओ ।

व्याख्या—इह नरकेषु नारकाः प्रायः सततमुत्पद्यन्ते च्यवन्ते च, कदाचिदेव तु विरहः—अन्तरं, स च लघुको-जघन्यः, सप्तस्वपि पृथ्वीषु समुदितासु यद्वा प्रत्येकमेकः समयः, गुरुः—उत्कृष्टः पुनरोघे—सामान्यतः सप्तस्वपि पृथ्वीषु समुदितासु द्वादश मुहूर्त्ताः, तदनन्तरमवश्यमन्यतमस्यां कश्चिदुत्पद्यते च्यवते च, प्रत्येकं तूत्कृष्ट उपपात-च्यवनविरहकालो रत्नप्रभायां चतुर्विंशतिर्मुहूर्त्ताः शर्करायां सप्त दिनाः वालुकायां पञ्चदश दिनाः पङ्कायां एको मासः धूमायां द्वौ तमःप्रभायां चत्वारः तमस्तमःप्रभायां षण्मासाः । स्वस्वान्तरकालादूर्ध्वं चावश्यमेतासु कोऽप्युत्पद्यते च्यवते चेति ॥ १८८ ॥ अथैकसमयोपपातच्यवनसङ्ख्याद्वारद्वयमतिदिशन् गाथाशकलमाह—

संखा पुण सुरसमा मुणेअव्वा ।

व्याख्या—सङ्ख्या पुनरेकस्मिन् समये नारकाणामुपपातविषया च्यवनविषया च सुरसमा ज्ञातव्या । यथा—"इगदुतिसंखमसंखा, इगसमए हुंति अ चवंति" ॥ १८८ ॥

अथ के जीवा नरकं यान्तीत्येवंरूपं गतिद्वारमाह—

संखाउपजत्तपणिंदितिरिनरा जंति नरएसुं ॥ १८९ ॥

व्याख्या—पञ्चेन्द्रियतिर्यङ्नराः सङ्ख्याताायुषः पर्याप्ताश्च सन्तो यान्ति नरकेषु, एतेऽपि च नरकायुर्बन्ध-

हेतुभावे सति, न यथा कथञ्चित्, तद्धेतुश्च मिथ्यात्वादिरनेकधा, यदुक्तम्—"मिच्छद्दिट्ठि महारंभपरिग्गहो तिव्वलोह निस्सीलो । निरयाउअं निबंधइ, पावरुई रोद्दपरिणामो ॥ १ ॥" १८९ ॥

उक्ता ओघतो नरके गतिः, अथैतामेव प्रतिपृथिव्याह—

असन्नि सरिसिव पक्खि सीह उरगित्थि जंति जा छट्ठिं ।
कमसो उक्कोसेणं, सत्तमपुढविं मणुअमच्छा ॥ १९० ॥

व्याख्या—असंज्ञिनः—संमूर्च्छिमपञ्चेन्द्रियाः, ते च संमूर्च्छिममनुष्याणामपर्याप्तानामेव कालकरणतो नरकगतेरभावात्तिर्यञ्चः उत्कर्षतोऽपि प्रथमामेव पृथ्वीं यावद्गच्छन्ति, न परतः, तत्रापि चायुःकृतो विशेषो यथा—'असन्नी णं नेरइआउअं पकरेमाणा जहन्ने णं दस वाससहस्साइं, उक्कोसेणं पलिओवमस्स असंखेज्जइभागं पकरेंति" त्ति, तथा ज्ञानकृतो विशेषो, यद्वृद्धाः—असंज्ञिभ्य उत्पद्यमानास्तथा बोधमान्द्यादपर्याप्तावस्थायामव्यक्तमप्यवधिं नाप्नुवन्ति, तथा च जीवाभिगमः—"नेरइआ अत्थेगइआ दुअन्नाणी, अत्थेगइआ तिअन्नाणी" इति । तथा सरीसृपा—भुजपरिसर्प्पा गोधानकुलादयो गर्भव्युत्क्रान्ता द्वितीयामेव यावत्, पक्षिणो—गर्भजा गृध्रादयस्तृतीयां, सिंहाः—सिंहोपलक्षिताश्चतुष्पदा गर्भजाश्चतुर्थीं, उरगा—उरःपरिसर्प्पाः सर्प्पादयो गर्भजाः पञ्चमीं, स्त्रियः—

स्त्रीरत्नाद्याः षष्ठीं, मनुजा-मनुष्या मत्स्याश्च—जलचरा, उभयेऽपि गर्भजाः सप्तमीं यावदुत्कर्षतो गच्छन्ति । एवमेषा गतिरुत्कृष्टाऽभिहिता. जघन्या तु सर्वेषामप्येषां रत्नप्रभायाः प्रथमे प्रतरे, मध्यमा पुनर्जघन्यायाः परतो यथास्वमुत्कृष्टाया अर्वाग् बोद्धव्या ॥ १९० ॥

अथ केषाञ्चित्तिरश्चां बाहुल्यकृतं विशेषमाह—

वाला दाढी पक्खी, जलचरनरगागया उ अइकूरा ।
जंति पुणो नरएसुं, बाहुल्लेणं न उण निअमो ॥ १९१ ॥

व्याख्या—'व्यालाः' सर्प्पादयो 'दंष्ट्रिणो' व्याघ्रसिंहादयः 'पक्षिणो' गृध्रादयो 'जलचरा' मत्स्यजातयः, एते सर्वेऽपि नरकादागता अतिक्रूराध्यवसायवशगाः सन्तः कृत्वा पञ्चेन्द्रियवधादीन् पुनर्नरकेषु गच्छन्ति । एतच्च बाहुल्येनोच्यते, न पुनर्नियमो, यतो नरकागता अपि केचिदेते प्राप्तसम्यक्त्वा यान्त्येव शुभां गतिम् ॥ १९१ ॥

संहननविशेषाद्गतिविशेषं प्रसङ्गतो लेश्याश्च नारकाणामाह—

दोपढमपुढविगमणं, छेवट्ठे कीलिआइसंघयणे ।
एक्केक्कपुढवीवुड्ढी, आइतिलेसाउ नरएसु ॥ १९२ ॥

व्याख्या—सेवार्त्ते संहनने सत्युत्कर्षतो द्वे एव—रत्नशर्कराप्रभे प्रथमपृथिव्यौ यावद्गच्छन्ति जीवा, न परतः। ततः पश्चानुपूर्व्यैव कीलिकादौ संहनने एकैकपृथ्वीवृद्धिः कार्या, यथा—कीलिकाख्ये तृतीयां यावत् अर्द्धनाराचे चतुर्थी नाराचे पञ्चमीं ऋषभनाराचे षष्ठीं वज्रर्षभनाराचे सप्तमीं यावदिति। एषा च गतिरुत्कृष्टा। जघन्या तु सर्वैरपि संहननैरध्यवसायमान्द्याद्रत्नप्रभायाः प्रथमे प्रतरे, मध्यमा पुनर्जघन्याया ऊर्ध्वं यथास्वमुत्कृष्टाया अर्वागिति। तथा लेश्याषट्कमध्यादाद्यास्तिस्रो लेश्याः कृष्णनीलकापोताख्या नरकेषु भवन्ति॥ १९२॥

लेश्यात्रयमेव प्रतिपृथिवि विभागेनाह—

दुसु काऊ तइआए, काऊ नीला य नील पंकाए।
धूमाएँ नीलकिण्हा, दुसु किण्हा हुंति लेसाउ॥ १९३॥

व्याख्या—'द्वयोः' प्रथमद्वितीययोः पृथिव्योर्लेश्या कापोता, केवलं शर्करायां क्लिष्टतरा। एवमन्यास्वपि सजातीया विजातीया च लेश्याऽधोऽधः क्लिष्टतरा क्लिष्टतमा च वाच्या। तृतीयस्यां 'काऊ नीला य'त्ति केषाञ्चित् प्रथमप्रतरगतानां नारकाणां कापोता, उत्कर्षतोऽप्यस्या लेश्यायाः पल्योपमासङ्ख्येयभागाधिकसागरोपमत्रयस्थितिकत्वात्, शेषाणां नीला। पङ्कायां केवला नीला। धूमायां केषाञ्चिदाद्यप्रतरगतानां नारकाणां नीला, उत्कर्षतो-

द्भवस्याः पल्योपमासङ्ख्येयभागाधिकदशसागरोपमस्थितिकत्वात्, शेषाणां कृष्णा। 'द्वयोः' षष्ठीसप्तम्योः कृष्णैव नवरं सप्तम्यां परमकृष्णा। एवं सप्तस्वपि विभक्ता भवन्ति लेश्याः॥१९३॥अत्राहुः केचित्—यथैता नारकाणां प्रागुक्ताश्च सुराणां बाह्यवर्णरूपा द्रव्यलेश्याः प्रतिपत्तव्याः, अन्यथा सप्तमपृथ्वीनारकाणां सम्यक्त्वावाप्तिः श्रुताभिहिता न युज्यते, उपरितनलेश्यात्रये एवागमे तदवाप्तेरुक्तत्वात्, यदाह—"सम्मत्तस्स य तिसु उवरिमासु पडिवज्जमाणओ होइ। पुव्वपडिवन्नओ पुण, अन्नयरीए उ लेसाए ॥ १ ॥" उपरितन्यश्च लेश्यास्तेषां न सन्ति, कृष्णाया एव सप्तमपृथिव्यामुक्तत्वात्। तथा सौधर्म्मे तेजोलेश्यैवोक्ता, अस्याश्च प्रशस्तपरिणामहेतुत्वेन संगमकादीनां भुवनगुरौ रौद्रोपसर्गकर्तृत्वानुपपत्तिः, तथा च सप्तमपृथिव्यां सम्यक्त्वान्यथानुपपत्त्या तेजोलेश्यादिसद्भावे 'आइतिलेसाउ नरएसुं' ति नियमोऽपि विरुध्यते, तस्माद्बाह्यवर्णरूपा एवैता इति। एतन्निराकरणार्थमाह—

सुरनारयाण ताओ, दव्वलेसा अवट्ठिआ भणिआ।
भावपरावत्तीए, पुण एसिं हुंति छल्लेसा ॥ १९४ ॥

व्याख्या—अत्र यास्तेजआद्यास्तिस्रः सौधर्म्मादिदेवानां, याश्च कृष्णाद्यास्तिस्रो नारकाणां लेश्या उक्ताः, ता अवस्थिता द्रव्यलेश्याः आगमे भणिताः, लेश्याद्रव्याण्यवस्थितानीत्यर्थः, न पुनर्बाह्यवर्णरूपाः, तत्तद्द्रव्यक्षेत्रकाला-

दिसामग्रीतो भावपरावृत्त्या पुनरेषां—सुरनारकाणां षट् लेश्याः । अयमभिप्रायः—तिर्यङ्मनुष्याणां भवसंक्रान्तौ शेषकालं च लेश्या लेश्यान्तरोपधाने विशुद्धवस्त्रमिव मञ्जिष्ठादिरागयोगे सर्वथा स्वरूपत्यागात्तद्रूपेणैव परिणमति, अन्यथैतल्लेश्यायाः पल्योपमस्थितेरपि सम्भवादुत्कर्षतोऽप्यन्तर्मुहूर्त्तमागमोक्तं विरुध्यते । देवनारकाणां तु लेश्याया-स्तदन्यलेश्यायोगे तदाकारमात्राद्येव जायते, न पुनस्तद्रूपता, तथाहि—यथा वैडूर्यादिमणिः प्रोतकृष्णादिसूत्रस-म्पर्कादस्फुटं किञ्चित्तदाकारभावमात्रं स्फटिको वा जपाकुसुमादियोगतः स्पष्टं तत्प्रतिबिम्बमात्रं प्रतिपद्यते, न तूभावपि तद्रूपतां, तथैषां कृष्णादिलेश्याद्रव्याणि नीलादिलेश्याद्रव्यौघं प्राप्य कदाचिदस्पष्टं तदाकारभावमात्रं कदाचित्स्पष्टं तत्प्रतिबिम्बमात्रं प्रतिपद्यन्ते, न पुनस्तद्वर्णगन्धरसस्पर्शतया परिणम्य नीलादिलेश्याद्रव्याण्येव भव-न्ति । एवं च सप्तमपृथिव्यामपि यदा कृष्णलेश्या तेजोलेश्यादिद्रव्याणि प्राप्य तदाकारमात्रेण तत्प्रतिबिम्बमा-त्रेण वाऽन्विता भवति, तदा कृष्णलेश्याद्रव्ययोगेऽपि साक्षात् तेजोलेश्यादिद्रव्यसान्निध्ये इव शुभः परिणामो नारकस्य जायते, जपोपरक्तस्फटिकस्य रक्ततावत्, तत्परिणामस्य चास्य सम्यक्त्वावाप्तिरविरुद्धेति । नचैवमपि तेजो-लेश्यादिसद्भावे सप्तमपृथिव्यां केवलकृष्णलेश्याद्यभिधायिनः सूत्रस्य व्याघातो, यतस्तस्यां कृष्णैव सदाऽवस्थायिनी, तैजस्यादिका त्वाकारमात्रादिना कदाचिदेव जायते, न च जाताऽपि चिरमवतिष्ठते, न चावस्थितायामपि तस्यां कृष्णलेश्याद्रव्याणि स्वस्वरूपं त्यजन्ति, ततोऽधिकृतसूत्रे कृष्णैव सप्तम्यामुक्तेत्येवं सर्वत्र भावनीयम् । अत एव संगम-

कादीनामप्याकारमात्रादिना कृष्णलेश्यासद्भावादुपपद्यते भुवनगुरावुपसर्गकर्तृत्वं, तथाऽवस्थितलेश्यापेक्षो लेश्यात्रयनियमोऽप्येवमविरुद्ध एव । किञ्च–आसां बाह्यरूपत्वे भगवत्यां प्रज्ञापनादौ च "नेरइआ णं भंते ! सव्वे समवन्ना ? गोअमा ! नो इणट्ठे समट्ठे, जाव तत्थ णं जे ते पुव्वोववन्नगा ते णं विसुद्धवण्णतरागा, जे ते पच्छोववन्नगा ते णं अविसुद्धवण्णतरागा" इति वर्णमुक्त्वा, "नेरइआ णं भंते ! सव्वे समलेसा ? गोअमा ! जाव तत्थ णं जे ते पुव्वोववन्नगा ते णं विसुद्धलेसतरागा, जे ते पच्छोववन्नगा ते णं अविसुद्धलेसतरागा" इति लेश्योक्तिरतिरिच्यते । अपिच— यद्येताः सुरनारकाणां द्रव्यलेश्या बाह्यवर्णरूपाः स्युस्तर्हि देवानाम् 'असुरा काला' इत्यादिबाह्यवर्णमभिधाय पुनः "भवणवण पढमचउलेस" इत्यादिलेश्याभिधानमनर्थकं स्यादित्यलं प्रसङ्गेन। इह च द्रव्यलेश्यानामवस्थितत्वाभिधानेन येषां देवानां नारकाणां च याः काश्चन लेश्याः सम्भवन्ति तासां स्वस्वभवस्थितिप्रमाणमवस्थितिकालमानमुक्तं भवति, तच्च 'तिरिनर आगामिभवलेसाए०" इत्यादिवक्ष्यमाणन्यायात् पूर्वोत्तरभवसम्बन्ध्यन्तर्मुहूर्तद्वयाधिकं बोद्धव्यम् ॥ १९४ ॥ उक्तं नारकाणां गतिद्वारम्, अथैते नरकादुद्वृत्ताः क्वागच्छन्तीत्यागतिद्वारमाह—

निरउवट्टा गब्भे, पजत्तसंखाउ लद्धि एएसिं ।
[1]चक्कि [2]हरिजुअल [3]अरहा, [4]जिणे [5]जई [6]दिस सम्मँ पुढविकमा ॥ १९५ ॥

व्याख्या—निरयात्—नरकादुद्वृत्ताः—च्युताः सन्तो जीवा अनन्तरभवे गर्भे एव जायन्ते, न संमूर्च्छिमतिर्यङ्नरसुरनारकेषु, गर्भजा अपि पर्याप्ता एव, न लब्ध्यपर्याप्ताः, तथा सङ्ख्यातायुषो नासंख्यातजीविनः । लब्धिश्चैतेषां नारकाणां यस्मान्नरकादुद्वृत्तानां या जायते सा पृथ्वीक्रमादियं, यथा—प्रथमाया एव रत्नप्रभाया उद्वृत्ता अनन्तरभवे चक्रवर्त्तिनो भवन्ति, न शेषपृथ्वीभ्यः, सम्भवमात्रं चेदं, न पुनर्भवन्त्येवेति । एवं द्वितीयायाः द्वितीयां मर्यादीकृत्योद्वृत्ता 'हरिजुअल'त्ति वासुदेवबलदेवाः, एवं सर्वत्र मर्यादा भावनीया । तृतीयस्या अर्हन्तः—तीर्थकराः, ते च पूर्वबद्धनरकायुषः स्वहेतूपात्ततीर्थकृन्नामगोत्राः श्रेणिकादय इव न शेषाः । चतुर्थ्या जिनाः—सामान्यकेवलिनः । पञ्चम्या यतयः—सर्वविरताः । षष्ठ्याः 'दिस'त्ति देशविरताः । सप्तम्यास्तूद्वृत्ताः 'सम्म'त्ति सम्यग्दृष्टयो भवन्ति, सम्यक्त्वमात्रं लभन्ते, न देशविरत्यादिकमित्यर्थः ॥ १९५ ॥ अथ नारकाणामवधिक्षेत्रमाह—

रयणाएँ ओहि गाउअ, चत्तारद्धुट्ठ गुरुलहु कमेणं ।
पइपुढवि गाउअद्धं, हायइ जा सत्तमि इगद्धं ॥ १९६ ॥

व्याख्या—'रत्नप्रभायां' प्रथमपृथिव्यां, नारकाणामवधिक्षेत्रमुत्कृष्टं जघन्यं च क्रमाच्चत्वारि अर्द्धचतुर्थानि च गव्यूतानि, ततः परं प्रतिपृथिवि गव्यूतार्द्धमुभयत्र हीयते, यावत् सप्तम्यामेकमर्द्धं च गव्यूतमिति । तथाहि—प्रथ-

मायामुत्कृष्टं अवधिक्षेत्रं योजनं, द्वितीयस्यां सार्द्धं गव्यूतत्रयं, तृतीयस्यां गव्यूतत्रयं चतुर्थ्यामर्द्धतृतीयानि गव्यूतानि, पञ्चम्यां द्वे गव्यूते, षष्ठ्यां सार्द्धं गव्यूतं, सप्तम्यामेकं गव्यूतं। जघन्यं तु सप्तस्वपि क्रमात् सार्द्धतृतीयानि गव्यूतानि त्रीणि अर्द्धतृतीयानि द्वे सार्द्धगव्यूतं गव्यूतं अर्द्धगव्यूतं चेति ॥ १९६ ॥ उक्तमागतिद्वारं, साम्प्रतं नारकवक्तव्यतामुपसंहरन् मनुष्यद्वारसम्बन्धनायाह—

निरयदारं सम्मत्तं, मणुअदारं भणइ,

अत्र च भवनद्वारवर्जान्यष्टौ प्रतिद्वाराण्यत आदौ स्थित्यवगाहनाद्वारे प्राह—

गब्भनर तिपलिआऊ, तिगाउ उक्कोसतो जहन्नेणं।
मुच्छिम दुहावि अंतमुहु अंगुलासंखभागतणू ॥ १९७ ॥

व्याख्या—इह नरा द्विधा, गर्भजाः संमूर्च्छिमाश्च, तत्र गर्भे जाताः गर्भजाः, मूर्च्छनं मूर्च्छः—गर्भमन्तरेणैवोत्पादस्तेन निर्वृता 'घञ् च भावादिम'इति घञ्प्रत्ययान्तादिमप्रत्यये मूर्च्छिमाः। तत्र गर्भोपलक्षितनरा उत्कर्षतस्त्रिपल्योपमायुषः त्रिगव्यूतावगाहनाश्च। तथा ते गर्भजनरा जघन्यतो मूर्च्छिमनरास्तु 'दुहावि'त्ति उत्कर्षतो जघन्यतश्चान्तर्मुहूर्तायुषोऽङ्गुलासङ्ख्यातभागतनवश्च, केवलं मूर्च्छिमेषु उत्कृष्टाभ्यामन्तर्मुहूर्त्ताङ्गुलासङ्ख्येयभागाभ्यां

जघन्यावन्तर्मुहूर्त्ताङ्गुलासङ्ख्येयभागौ लघू द्रष्टव्यौ । संमूर्छिममनुष्याश्च अर्द्धतृतीयद्वीपसमुद्रेषु गर्भजमनुष्याणामेवोच्चारप्रस्रवणश्लेष्मसिङ्घानवान्तपित्तशुक्रशोणितमृतकलेवरेषु स्त्रीपुंससंयोगेषु नगरनिर्द्धमनेषु सर्वेषु वाऽशुचिस्थानेषु संमूर्च्छन्ति । एते च 'असन्नीमिच्छादिट्ठी, सव्वाहिं पज्जत्तीहिं अपज्जत्तगा चेव कालं करेंति' । विशेषश्चात्र—वैक्रियशरीरं नराणां पर्याप्तसङ्ख्यातायुर्गर्भजानामेव, तच्च 'जहन्नेणं अंगुलस्स संखेज्जइभागं, उक्कोसेणं साइरेगं जोअणसयसहस्सं (आहारकं तु) इड्ढिपत्तपमत्तसंजयाणं समचउरंससंठा(णा)णं, जहन्नेणं देसूणा उक्कोसेणं पडिपुन्ना रयणी' तैजसकार्मणे सर्वसंसारिणां, ते च यस्य यदौदारिकादि सम्भवति तस्य तद्रूपे, अन्यत्र समुद्घातात् ॥ १९७ ॥ उक्ते नराणां स्थित्यवगाहने, अथैषामेवोपपातोद्वर्त्तनयोर्विरहकालमेकसमयसङ्ख्यां चाह—

बारसमुहुत्त गब्भे, इयरे चउवीस विरहु उक्कोसो ।
जम्ममरणेसु समओ, जहन्नसंखा सुरसमाणा ॥ १९८ ॥

व्याख्या—जन्ममरणयोः—उपपातोद्वर्त्तनयोः सम्बन्धी प्रत्येकं विरहः—अन्तरकाल उत्कृष्टो 'गब्भे'त्ति गर्भजनरविषयो द्वादश मुहूर्त्ताः, 'इयरे'त्ति संमूर्च्छिमनरविषयश्चतुर्विंशतिर्मुहूर्त्ता, जघन्यतस्तूभयत्रापि समयः । सङ्ख्या पुनरेकस्मिन् समये उत्पद्यमानानामुद्वर्त्तमानानां च नराणां सुरसमाना, यथा—'इगदुतिसंखमसंखा, इगसमए हुंति अ

चवंति' अत्र चासंख्याततवं सामान्यतो गर्भजसंमूर्च्छिमापेक्षं॥ १९८॥ अथ के जीवा मनुष्येषु गच्छन्तीत्येवं गतिद्वारमाह—

सत्तममहिनेरइए, तेऊ वाऊ असंखनरतिरिए ।
मुत्तूण सेसजीवा, उप्पज्जंती नरभवंमि ॥ १९९ ॥

व्याख्या—सप्तमपृथ्वीनारकास्तेजस्कायिका वायुकायिका असङ्ख्यातवर्षायुर्नरतिर्यञ्चश्च मृत्वाऽनन्तरं मनुजेषु नोत्पद्यन्ते । अत एतान् मुक्त्वा शेषाः सुरमनुजतिर्यग्नारका उत्पद्यन्ते नरभवे ॥ १९९ ॥ अत्रैव विशेषमाह—

सुरनेरइएहिं चिअ, हवंति हरिअरिहचक्किबलदेवा ।
चउविहसुर चक्किबला, वेमाणिअ हुंति हरिअरिहा ॥ २०० ॥

व्याख्या—वासुदेवार्हच्चक्रवर्त्तिबलदेवाः सुरनारकेभ्य एवोत्पद्यन्ते, न तिर्यग्नरेभ्यः, तत्र नारकेभ्यः 'चक्किहरिजुअल अरिहा' इत्यादि प्राग्वत् । देवेभ्यस्त्वेवं—चतुर्विधा अपि सुराः च्युताः सन्तश्चक्रवर्त्तिनो बलदेवाश्च भवन्ति, अर्हद्वासुदेवास्तु वैमानिका एव सन्तः ॥ २०० ॥ तथाह—

हरिणो मणुस्सरयणाइं, हुंति नाणुत्तरेहिं देवेहिं ।

अह संभवमुववाओ, हयगयएगिंदिरयणाणं ॥ २०१ ॥

व्याख्या—वासुदेवा मनुष्यरत्नानि चानुत्तरविमानवासिभ्यो देवेभ्यो नोत्पद्यन्ते, इयमत्र भावना—वासुदेवा उक्तन्यायतो नारकवैमानिकेभ्य एवोत्पद्यन्ते, तत्र यदि वैमानिकेभ्यो वासुदेवा भवन्ति तदाऽनुत्तरसुरान्वर्जयित्वा शेषेभ्य एव। तथा चतुर्दश चक्रवर्त्तिनो रत्नानि, तत्र चक्रादीनि सप्तैकेन्द्रियाणि, पुरोहितादीनि सप्त पञ्चेन्द्रियाणि, तत्रापि गजतुरगवर्जानि पञ्च मनुष्यरूपाणि, तत्र मनुष्यरत्नानि सप्तमपृथ्वीनारकतेजोवाय्वसङ्ख्यातायुस्तिर्यङ्नरेभ्यो मनुष्योत्पत्तेः प्राग् निषेधात् शेषस्थानेभ्य एवोत्पद्यन्ते, यदा च वैमानिकेभ्यश्च्युत्वा पुरोहितसेनापतिगृहपतिवर्द्धकिस्त्रीरूपाणि मनुष्यरत्नानि भवन्ति तदानुत्तरान् वर्जयित्वा शेषेभ्य एवेति। तथा हयगजैकेन्द्रियरत्नानां यथासम्भवमुपपातः येभ्यः स्थानेभ्यः सम्भवन्ति तेभ्यः सर्वेभ्योऽप्यविशेषेणैवोत्पद्यन्त इत्यर्थः। एतदुक्तं भवति—नारकसंख्यातायुस्तिर्यङ्नरसहस्रारान्तदेवेभ्यो हयगजरत्नयोरुत्पादः, एतेभ्य एव तिरश्चामुत्पत्तेरभिधानात्, एकेन्द्रियरत्नानां तु संख्यातायुस्तिर्यङ्नरेभ्यः ईशानान्तदेवेभ्यश्चोत्पादः, एतेभ्यः एवैकेन्द्रियोत्पत्तेरुक्तत्वात्। अयं च यथासम्भवमुपपातः स्वरूपमात्रप्रदर्शनफलोऽपि मनुष्यरत्नानां विशेषाभिधानप्रस्तावात् स्थानाशून्यार्थमभिहित इति ॥ २०१ ॥ रत्नानामेव नामानि कियतामपि प्रमाणं च गाथाद्वयेनाह—

वामपमाणं चक्कं, छत्तं दंडं दुहत्थयं चम्मं ।
बत्तीसंगुल खग्गो, सुवण्णकागिणि चउंगुलिआ ॥ २०२ ॥

चउरंगुलो दुअंगुल, पिहुलो अ मणी पुरोहिगयतुरया ।
सेणावइगाहावईवड्ढइथीचक्किरयणाइं ॥ २०३ ॥

व्याख्या—चक्रं, छत्रं, दण्डशब्दस्य पुंनपुंसकलिङ्गत्वात् दण्डं, त्रीण्येतानि रत्नानि व्यामप्रमाणानि, व्यामो नाम प्रसारितोभयबाह्वोः पुंसस्तिर्यग्हस्तद्वयाङ्गुल्यग्रान्तरालं, यदमरः. 'व्यामो बाह्वोः सकरयोस्ततयोस्तिर्यगन्तरम्' । चर्म्मरत्नं द्विहस्तदैर्घ्यं । खड्गरत्नं द्वात्रिंशदङ्गुलदैर्घ्यं । सुवर्णकाकिणी चतुरङ्गुलिका–चतुरङ्गुलप्रमाणं, जात्यस्वर्णमयं काकिणीरत्नमित्यर्थः । अत्र च काकिनिकाकिणिरिति च शब्दद्वयमौणादिकं, तत्र स्त्रियामीप्प्रत्यये काकिनी काकिणी चेत्युभयथाप्यदोषः । चतुरङ्गुलदीर्घो द्व्यङ्गुलपृथुलश्च मणिः । एतानि सप्ताप्येकेन्द्रियाणि सर्वचक्रवर्त्तिनामात्माङ्गुलेन, शेषाणि तु सप्त पुरोहितादीनि पञ्चेन्द्रियाणि, तानि च तत्तत्कालीनपुरुषोचितमानानि, चक्रादिरत्नानां च स्वरूपं यथा–चक्रं समस्तायुधातिशायि दुर्जयारिविजयकरं १, छत्रं चक्रवर्त्तिहस्तस्पर्शमात्रोपजातद्वादशयोजनायामविस्तारं, तद्वैताढ्योत्तरदिग्वर्त्तिम्लेच्छाराधितमेघकुमारासुरमुक्ताम्बुभरनिरसनसमर्थं २, दण्डो विषमभुवः

समत्वकारी, यत्नविशेषाच्च व्यापार्यमाणो योजनसहस्रमप्यधो विदारयति ३, चर्म्मरत्नं छत्रस्याधश्चक्रवर्त्तिहस्तस्पर्शतो जातद्वादशयोजनायामविस्तारं प्रातरुप्तापराह्णसंपन्नोपभोग्यशाल्यादिकरं ४, खड्गो रणेष्वप्रतिहतशक्तिः ५, काकिनी वैताढ्यगुहयोरुभयभित्तिष्वेकोनपञ्चाशन्मण्डलकरणाद्युपयोगिनी ६, मणिरूर्ध्वाधःस्थितयोश्छत्रचर्मरत्नयोरपान्तराले छत्रतुम्बे न्यस्तो द्वादशयोजनस्य चक्रवर्त्तिकटकस्य प्रकाशकस्तमिस्रखण्डप्रपातगुहाद्वये च प्रविशतश्चक्रिणो हस्तिशिरोन्यस्तो द्वादशयोजनानि यावत्पूर्वापरपुरोरूपासु तिसृषु दिक्षु महातमोघाती शिरोहस्तादिबद्धः समस्तरोगोपद्रवापहारी चेति ७, पुरोहितः शान्तिकर्मादिकृत् ८, गजतुरगौ महावेगपराक्रमौ १०, सेनापतिर्गङ्गासिन्धुपरकूलवर्त्तिखण्डविजयी दण्डाभिधः ११, गृहपतिर्गृहोचितेतिकर्त्तव्यतापरः १२, वर्द्धकिर्गृहनिवेशादिसूत्रणादिकारी तमिस्रगुहायां खण्डप्रपातगुहायां चोन्मग्नजलानिमग्नजलयोर्नद्योश्चक्रवर्त्तिसैन्योत्तारणाय सेतुकारी च । तथा चावश्यकचूर्णिः—"तए णं से वड्ढइरयणे भरहवयणसंदेसेणं तासु नईसु अणेगखंभसयसंनिविट्ठं अचलमकंपं सालंवणबाहागं सव्वरयणामयं सुहसंकमं करेइ" १३, स्त्रीरत्नमत्यद्भुतकामसुखधाम १४, चतुर्द्दशाप्येतानि रत्नानि प्रत्येकं यक्षसहस्राधिष्ठितानि । तथैतानि जम्बूद्वीपे जघन्यपदे चतुर्णां चक्रिणां भावात् षट् पञ्चाशत् ५६, उत्कृष्टपदे अष्टाविंशतिर्विदेहे एकैको भरतैरावतयोरिति त्रिंशतश्चक्रिणां भावाच्चत्वारि शतानि विंशत्युत्तराणि ४२०, जम्बूद्वीपप्रज्ञप्त्यादिसंवादस्तु ग्रन्थगौरवभयान्न दर्श्यते ॥ २०२ ॥ २०३ ॥ अथ वासुदेवरत्नान्याह—

चक्कं धणुहं खग्गो, मणी गया तहय होइ वणमाला ।
संखो सत्त इमाइं, रयणाइं वासुदेवस्स ॥ २०४ ॥

व्याख्या—सुगमा, केवलं गदा—कौमोदकीनामा प्रहरणविशेषः, वनमाला सदैवाम्लाना देवार्पिता, शङ्खः-पाञ्चजन्यो द्वादशयोजनध्वनिः ॥ २०४ ॥ उक्तं सप्रसङ्गं गतिद्वारं, अथैते नराः स्वभवादुद्वृत्ताः क्वागच्छन्तीत्यागति-द्वारमाह—

संखनरा चउसु गईसु जंति पंचसुवि पढमसंघयणे ।
इग दु ति जा अट्ठसयं, इगसमए जंति ते सिद्धिं ॥ २०५ ॥

व्याख्या—सङ्ख्यातायुषो नराः, नरशब्दस्य जातिवाचकत्वात् मनुष्यजातिवर्त्तिनः स्त्रीपुंनपुंसकाश्चतसृषु—नारकतिर्यग्नरामररूपासु गतिषु तत्तद्योग्यपरिणामसम्भवे यान्ति-गच्छन्ति । त एव च प्रथमसंहनने सति 'पञ्चस्वपीति' तास्वेव मोक्षसहितासु गच्छन्ति । वज्रर्षभनाराचसंहननेनैव मोक्षं यान्तीत्यर्थः । ते च मनुष्यगतिवर्त्तिनः सामान्येन एकस्मिन् समये जघन्यत एको द्वौ त्रयो वा उत्कर्षतोऽष्टोत्तरं शतं सिद्धिं यान्ति ॥ २०५ ॥ अत्र वेदादिकृतान् विशेषानाह—

वीसित्थि दस नपुंसग, पुरिसट्ठसयं तु एगसमएणं।
सिज्झइ गिहि अन्न सलिंग, चउ दसट्ठाहिअसयं च ॥ २०६ ॥

व्याख्या—एकसमयेनोत्कर्षतो विंशतिरेव स्त्रियो दशैव नपुंसकाः पुरुषाणा त्वष्टोत्तरशतमेव सिध्यन्ति। तथा लिङ्गशब्दस्य प्रत्येकं योगाद्गृहिलिङ्गे स्थिताश्चत्वार एवैकसमयेन सिद्ध्यन्ति, एवमन्यलिङ्गे दश, स्वलिङ्गे अष्टाधिकं शतं ॥ २०६ ॥ तथा—

गुरुलहुमज्झिम दो चउ, अट्ठसयं उड्डहोतिरिअलोए।
चउबावीसट्ठसयं, दु समुद्दे तिन्नि सेसजले ॥ २०७ ॥

व्याख्या—उत्कृष्टदेहौ पञ्चधनुःशतोच्चौ द्वावेवैकसमयेनोत्कर्षतः सिध्यतः, एवं जघन्यदेहा हस्तद्वयोच्चाश्चत्वारः, मध्यमदेहा अष्टोत्तरं शतं। अत्र मुक्तियोग्य उत्कृष्टो देहः पञ्च धनुःशतानि जघन्यो द्वौ हस्तौ व्याख्यातस्ततः किञ्चिदागमाभिज्ञस्य यथावत्तत्त्वमजानतः स्यात्कस्याप्याशङ्का यथा—नाभेः सपादपञ्चधनुःशतोच्चत्वे 'संघयणं संठाणं, उच्चत्तं चेव कुलगरेहि समं'ति मरुदेव्यपि तन्मानेति कथं तस्याः सिद्धिः?, तथा जघन्यतोऽपि सप्तहस्तोच्छ्रितानां सिद्धि-

रागमे श्रूयते, ततः कथमेतदिति ? अतो व्यक्ताभिः क्षमाश्रमणगाथाभिरेव किञ्चित्तत्त्वमुच्यते—"किह मरुदेवीमाणं, नाभीओ जेण किंचिदूणा सा ?। तो किर पंचसय चिअ, अहवा संकोअओ सिद्धा ॥ १ ॥ संकोचश्च हस्तिस्कन्धाधिरूढत्वात्। सत्तूसिएसु सिद्धी, जहन्नओ किहमिहं विहत्थेसु ?। सा किर तित्थयरेसुं, सेसाणमिअं तु सिद्धाणं ॥२॥ ते पुण होज्ज विहत्था, कुम्मापुत्तादओ जहन्नेणं। अन्ने संवट्टिअसत्तहत्थसिद्धस्स हीणत्ति ॥ ३ ॥" अथवा—यदिदमागमे सप्त हस्ता जघन्यं, पञ्चधनुःशतान्युत्कृष्टं मानमुक्तं, तद्बाहुल्याद्, अन्यथा जघन्यमङ्गुलपृथक्त्वैरुत्कृष्टं धनुःपृथक्त्वैः क्रमाद्धीनमधिकं च बोद्धव्यं, यदाह—"बाहुल्लओ अ सुत्तंमि, सत्त पंच य जहन्नमुक्कोसं। इहरा हीणब्भहिअं, होज्जंगुलधणुपुहुत्तेहिं ॥ १ ॥ अच्छेरयाइ किंचिवि, सामन्नसुए न देसिअं सव्वं। होज्ज व अनिबद्धं चिअ, पंचसयाएसवयणं व ॥ २ ॥" अत्राद्यगाथायामुत्कृष्टं शरीरमानं धनुःपृथक्त्वैरभ्यधिकानि पञ्चधनुःशतान्युक्तं, तच्च पञ्चविंशत्यधिकपञ्चधनुःशतरूपं बोद्धव्यं। 'मरुदेवीवि आएसंतरेण नाभितुल्ल'त्ति सिद्धप्राभृतविवरणात्, तथा चात्र सिद्धप्राभृतसूत्रमपि—"ओगाहणा जहन्ना, रयणिदुगं अह पुणाइ उक्कोसा। पंचेव धणुसयाइं, धणुहपुहुत्तेण अहिआइं ॥ ३ ॥ एतट्टीकाव्याख्या च—पृथक्त्वशब्दो बहुत्ववाची, बहुत्वं चेह पञ्चविंशतिरूपं द्रष्टव्यमिति" । तथोर्द्ध्वलोके एकसमयेनोत्कर्षतश्चत्वार एव सिध्यन्ति, एवमधोलोके द्वाविंशतिः, तिर्यग्लोके अष्टोत्तरं शतं। तथा समुद्रे द्वौ, शेषजले च ह्रदनद्यादिसम्बन्धिनि त्रयः। अत्र जले अधोलोके च विशेषःसिद्धप्राभृते "चत्तारि उड्ढलोए,जले चउक्कं

दुवे समुद्दंमि । अट्ठसयं तिरिलोए, वीसपुहुत्तं अहोलोए ॥ १ ॥" एतट्टीका च—विंशतेः पृथक्त्वं द्वे विंशती ततो यद्यत्रापि 'दोवीसत्ति' पठ्यते तदोभयसंवादः, उत्तराध्ययनेषु तु जीवाजीवविभक्त्यध्ययने 'वीसमहे तहेवे'त्युक्तं ॥२०७॥ अथैते नराः कस्यागतेरागताः कियन्त एकस्मिन् समये सिध्यन्तीति सामान्यतो विशेषतश्चाह—

नरयतिरिआगया दस, नरदेवगईउ वीस अट्ठसयं ।
दस रयणासक्करवालुयाउ चउ पंकभूदगओ ॥ २०८ ॥
छच्च वणस्सइ दस तिरि, तिरित्थि दस मणुअ वीस नारीओ ।
असुराइ वंतरा दस, पण तद्देवीउ पत्तेअं ॥ २०९ ॥
जोइ दस देवि वीसं, विमाणि अट्ठसय वीस देवीओ ।

व्याख्या—नरकगतेरुद्धृत्य अनन्तरभवे मनुष्यगतावागताः सन्तो यद्येकस्मिन् समये सिध्यन्ति तदा दशैव । एवं तिर्यग्गतेरागता दश, मनुष्यगतेर्विंशतिः, देवगतेरष्टोत्तरशतं । गतिष्वेव विशेषचिन्तायां, रत्नशर्करावालुकाभ्य आगताः प्रत्येकं दश, पङ्कायाश्चत्वारः, धूमप्रभादिभ्यस्त्वागता न सिध्यन्तीत्युक्तं । पृथ्वीकायिकेभ्यश्चत्वारः

अप्कायिकेभ्यश्चत्वारः। वनस्पतिकायिकेभ्यः षट्। पञ्चेन्द्रियतिर्यग्भ्यो दश। तिरश्चीभ्योऽपि दश। तेजोवायुकायिकेभ्यो विकलेन्द्रियेभ्यश्चागताः सिद्धिं न गच्छन्तीति वक्ष्यति। मनुष्येभ्यो दश। नारीभ्यो विंशतिः। असुरकुमारेभ्यो नागकुमारेभ्यो यावत् स्तनितकुमारेभ्यो व्यन्तरेभ्यश्च प्रत्येकं दश। असुरकुमारीभ्यो यावत् स्तनितकुमारीभ्यो व्यन्तरीभ्यश्च प्रत्येकं पञ्च। ज्योतिष्केभ्यो दश। तद्देवीभ्यो विंशतिः। वैमानिकेभ्योऽष्टशतं। तद्देवीभ्यस्त्वागता विंशतिरेकस्मिन् समये सिध्यन्ति। तथा च प्रज्ञापना—"अणंतरागया णं भंते! नेरइआ एगसमएणं केवइआ अंतकिरिअं पकरेंति? गोअमा! जहन्नेणं एगो दो वा तिन्नि वा उक्कोसेणं दस, रयणप्पभापुढविनेरइआवि एवं चेव, जाव वालुअप्पभापुढविनेरइआ पंकप्पभापुढविनेरइआ उक्कोसेणं चत्तारि। असुरकुमारा दस। असुरकुमारीओ पञ्च। एवं जहा असुरकुमारा से देवीओ तहा जाव थणिअकुमारा। पुढविकाइआ चत्तारि। एवं आउकाइआवि वणस्सइकाइआ छ। पंचिंदिअतिरिक्खजोणिआ दस पंचिंदिअतिरिक्खजोणिणीओवि दस। मणुस्सा दस। मणुस्सीओ वीसं। वाणमंतरा दस वाणमंतरीओ पंच जोइसिआ दस। जोइसिणीओ वीसं। वेमाणिआ अट्ठसयं वेमाणिणीओ वीसमिति।" सिद्धप्राभृते च देवगतेरन्यत्र गतित्रयेऽपि दशेत्युक्तं, 'सेसाण गईण दसगदसगं'ति, तत्त्वं पुनर्बहुश्रुताः केवलिनो वा विदन्तीति॥ उक्ता नारकादिगतिभ्य आगतानां सामान्यतो विशेषतश्च सिद्धिः, अथ पुंवेदादिभ्य आगतानामाह—

तह पुंवेएहिंतो, पुरिसा होऊण अट्ठसयं ॥ २१० ॥
सेसट्ठभंगएसुं दस दस सिज्झंति एगसमयंमि ॥

व्याख्या—पुंवेदेभ्यो देवादिभ्य उद्वृत्ता जीवाः केचित्पुरुषा जायन्ते केचित् स्त्रियः केचिन्नपुंसकाः, एवं स्त्रीवेदेभ्यो-ऽपि देवीप्रभृतिभ्य उद्वृत्तानां भङ्गत्रयं, एवं नपुंसकेभ्योऽपि नारकादिभ्यो भङ्गत्रयं, सर्वसङ्ख्यया भङ्गा नव। तत्र ये पुंवेदेभ्य उद्वृत्त्य २ पुरुषा भूत्वा सिध्यन्ति तेषामेवैकस्मिन् समयेऽष्टशतं, शेषेषु पुनरष्टसु भङ्गकेषु प्रत्येकं दश दशैव। इदमुक्तं भवति—देवेभ्य आगताः पुरुषा भूत्वा एकसमयेनाष्टशतं सिध्यन्ति, स्त्रियो नपुंसकाश्च भूत्वा प्रत्येकं दशैव, देवीभ्यस्त्वागताः पुरुषा अपि भूत्वा दशैव, एवं स्त्रियो नपुंसकाश्च। यत्तु 'वैमानिकदेवीभ्यो ज्योतिष्कदेवीभ्यो नारीभ्यश्चागता विंशतिः सिध्यन्तीति' उक्तं, तत्र पुंस्त्रीनपुंसका द्विकसंयोगतस्त्रिकसंयोगतो वा मिलिताः सन्तो विंशतिः सिध्यन्ति, न पुनः केवलाः पुरुषाः स्त्रियो नपुंसका वा, यदपि 'विंशतिः स्त्रिय एकसमयेन सिध्यन्ती' त्युक्तं, तत्रापि काश्चित् पुरुषेभ्यः काश्चित् स्त्रीभ्यः काश्चिन्नपुंसकेभ्य आगताः सत्यो मिलिता विंशतिः सिध्यन्ति, न पुनः केव-लेभ्यः पुरुषेभ्यः केवलाभ्यः स्त्रीभ्यः केवलेभ्यश्च नपुंसकेभ्यः, एवमनया दिशा सर्वेऽपि भङ्गा भावनीया इति। अपरश्चात्र विशेषो दर्श्यते यथा—नन्दनवने चत्वार एकसमयेन सिध्यन्ति, 'नंदने चत्तारी'ति वचनात्। एकतरस्मिन्

विजये विंशतिः, 'वीसा एगयरे विजए' इति वचनात् । सर्वास्वकर्मभूमिषु प्रत्येकं संहरणतो दश; पण्डकवने द्वौ; पञ्चदशस्वपि कर्मभूमिषु प्रत्येकमष्टशतं । यदुक्तम् "संकमणाए दसगं, दो चेव हवंति पंडगवणंमि । समएण य अट्ठसयं, पन्नरससु कम्मभूमीसु ॥ १ ॥" तथा कालचिन्तायामुत्सर्प्पिण्यामवसर्प्पिण्यां च प्रत्येकं तृतीये चतुर्थे चारकेऽष्टशतं, अवसर्प्पिण्यां पञ्चमारके विंशतिः, शेषेष्वरकेषु प्रत्येकमुत्सर्प्पिण्यामवसर्प्पिण्यां च संहरणतो दश । [illegible] च—"उस्सप्पिणिओसप्पिणितइअचउत्थयसमासु अट्ठसयं । पंचमिआए वीसं, दसगं दसगं च सेसासु ॥ १ ॥" अत्र पञ्चम्यां समायामवसर्प्पिण्याः सम्बन्धिन्यां नोत्सर्पिण्याः, तत्र तीर्थाभावात्, इत्याद्यन्यदपि प्रभूतं शास्त्रान्तरेभ्यो बोद्धव्यं । संक्षिप्तरुचिसत्त्वानुग्रहफलत्वात्प्रयासस्येति ॥ अथ सिद्धिगतिमधिकृत्योपपातविरहकालं च्यवनाभावं चाह—

विरहो छमास गुरुओ, लहु समओ चवणमिह नत्थि ॥ २११ ॥

व्यक्तं, नवरं च्यवनं मुक्तौ नास्ति, तद्धेतुकर्म्माभावात् । यदुक्तम्—"दग्धे बीजे यथाऽत्यन्तं, प्रादुर्भवति नाङ्कुरः । कर्म्मबीजे तथा दग्धे, न रोहति भवाङ्कुरः ॥ १ ॥"

तथा—

अड सग छप्पण चउतिन्नि, दोन्नि एक्को अ सिज्झमाणेसु ।

" ॥ १ ॥ " एतट्टीका च—विंशतेः पृथक्त्वं द्वे विंश
द्वे समयंमि। अट्ठसयं तिरिलोए- वीसपहुत्तं अहोलोए

बत्तीसाइसु समया, निरंतरं अंतरं उवरिं ॥ २१२ ॥

व्याख्या—द्वात्रिंशदादिष्ववधिभूतेषु सिध्यत्सु यथासङ्ख्यमुत्कर्षतोऽष्टादयः समया निरन्तरं प्राप्यन्ते, तत ऊर्ध्वमवश्यमन्तरं भवति। इयमत्र भावना—एकादयो द्वात्रिंशत्पर्यन्ता निरन्तरमुत्कर्षतोऽष्टौ समयान् यावत्सिध्यन्ति, तथाहि—एकस्मिन् समये एको द्वौ वा यावत् द्वात्रिंशत् सिध्यन्ति, द्वितीयेऽप्येको द्वौ यावत् द्वात्रिंशत्, एवं तृतीयेऽपि यावदष्टमेऽपि समये एको द्वौ वा यावत् द्वात्रिंशत् सिध्यन्ति, ततः परमवश्यं समयाद्यन्तरं। यदा तु त्रयस्त्रिंशतमादिं कृत्वा यावदष्टाचत्वारिंशदेकसमयेन सिध्यन्ति, तदा उत्कर्षतो नैरन्तर्येण सप्त समयान् यावत् सिध्यन्ति, ततोऽवश्यमन्तरम्। एवमेकोनपञ्चाशदाद्याः षष्टिपर्यन्ता निरन्तरं सिध्यन्तः षट् समयान् यावत्प्राप्यन्ते, ततोऽन्तरम्। एवं सर्वत्र योज्यं, यावद्यदेकस्मिन् समये त्र्युत्तरं शतं उत्कर्षतो यावदष्टोत्तरं शतं सिध्यन्ति, तदा द्वितीये समये अवश्यमन्तरमिति ॥ २१२ ॥ द्वात्रिंशदादिष्वित्युक्तमतस्तानेव द्वात्रिंशदादीनवधीनाह—

बत्तीसा अडयाला, सट्ठी बावत्तरी अ अवहीओ।
चुलसी छन्नउई दुरहिअसयमट्ठुत्तरसयं च ॥ २१३ ॥

उक्ताया । अत्राहुः साङ्ख्यादयो—'गुणपुरुषान्तरज्ञानादिना प्रकृतिवियोगादिरूपामवाप्य मुक्तिं—मुक्ताः सर्वत्र तिष्ठन्ति, व्योमवत्तापवर्जिता' इत्यादि । अतस्तन्निराकरणाय विशिष्टमेव मुक्तानां क्षेत्रमाह—

पणयाल लक्खजोअणविक्खंभा सिद्धसिल फलिहविमला ।
तदुवरिगजोअणंते, लोगंतो तत्थ सिद्धठिई ॥ २१४ ॥

व्याख्या—सर्वार्थसिद्धविमानादूर्ध्वं द्वादशभिर्योजनैः पञ्चचत्वारिंशद्योजनलक्षविष्कम्भा वृत्तत्वादायामतोऽपि तावन्माना सर्वात्मना चार्जुनसुवर्णमयत्वात् स्फटिकवन्निर्मला सिद्धशिला भवति । सिद्धशिला सिद्धभूमिरीषत्प्राग्भारा शीता चेति पर्यायाः । सर्वार्थात् द्वादशभिर्योजनैर्लोकान्त इत्यन्ये, तत्त्वं पुनः केवलिनो विदन्ति । स्थूलत्वं चास्याः 'बहुमज्झदेसभाए, अट्ठेव य जोअणाइ बाहल्लं । चरमंतेसु अ तणुई, अंगुलसंखेज्जईभागं ॥ १ ॥' अत्र बहुमध्यदेशभाग आयामविष्कम्भाभ्यामप्यष्टौ योजनानि । अत ऊर्ध्वं 'गंतूण जोअणं जोअणं तु परिहाइ अंगुलपुहत्तं । तीसेविअ पेरंता, मच्छिअपत्ताओ तणुअयरा ॥१॥' किमुक्तं भवति ? उत्तानच्छत्रनिभा घृतपूर्णतथाविधकरोटिकाकारा वा सिद्धिरिति । स्थापना । तस्याश्चोपर्येकयोजनस्यान्ते लोकान्तस्तत्र सिद्धानां स्थितिः । इदमुक्तं भवति—योजनस्योपरितने क्रोशे तस्याप्युपरितने षष्ठभागे त्रीणि धनुःशतानि त्रयस्त्रिंशानि धनुस्त्रिभागश्चेत्येवंरूपे सिद्धास्तिष्ठन्ति । प्रागुक्तायाः

पञ्चधनुःशतरूपायाः सिद्धिगमनयोग्योत्कृष्टावगाहनायाः सिद्धिगमनादर्वाक् शुषिरपूरणेन त्रिभागोनत्वाद्, एता-वत्या एवोत्कर्षतः सिद्धावगाहनाया भावात्। यदुक्तम्—"तिन्नि सया तेत्तीसा, धणुत्तिभागो अ कोसछब्भागो। जं परमोगाहोऽयं, तो ते कोसस्स छब्भागो ॥१॥" इति ॥२१४॥ अथ मनुष्यद्वारोपसंहारपूर्वकं तिर्यग्द्वारं सम्बन्धयति—

"मणुअदारं समत्तं, तिरिअदारं भण्णइ"

अत्रापि भवनद्वारवर्ज्जान्यष्टौ प्रतिद्वाराणि। इह चैकद्वित्रिचतुःपञ्चेन्द्रियभेदात् पञ्चविधास्तिर्यञ्चः, ते चैकेन्द्रियाणां पृथिव्यप्तेजोवायुवनस्पतिभेदतः पञ्चविधत्वान्नवविधाः, तत्राद्या अष्टौ संमूर्च्छिमा एव, पञ्चेन्द्रियास्तु गर्भजाः संमूर्च्छिमाश्च, तत्र तावद्गर्भजसंमूर्च्छिमभेदमनपेक्ष्य सामान्येन नवविधानामपि तिरश्चां स्थितिमाह—

बावीससगतिदसवाससहसगणितिदिणबेंदिआईसु।
बारसवासुणपणादिण, छमासतिपलिअट्ठिई जेट्ठा ॥ २१५ ॥

व्याख्या—अत्र द्वीन्द्रियादीनां द्वादशवर्षादिकायाः स्थितेरभिधानात् द्वाविंशतिवर्षसहस्रादिका स्थितिरेकेन्द्रि-

याणां, तत्राप्यग्नेः पृथगभिधानात् पृथिव्यब्वायुवनस्पतीनामेव यथाक्रमं त्रोद्धव्या । तद्यथा–पृथिवीकायिकानां द्वाविंशतिर्वर्षसहस्रा ज्येष्ठा स्थितिः, एवमप्कायिकानां सप्त, वायुकायिकानां त्रयः, वनस्पतिकायिकानां दश । 'अगणितिदिण'त्ति, अग्निकायिकानां त्रीणि दिनानि, तथा द्वीन्द्रियाणां द्वादश वर्षाणि, त्रीन्द्रियाणामेकोनपञ्चाशद्दिनानि । चतुरिन्द्रियाणां षण्मासाः, पञ्चेन्द्रियाणां त्रीणि पल्योपमानि । एषा चोत्कृष्टा स्थितिः प्रायो निरुपद्रवे स्थाने द्रष्टव्या । एवमग्रेऽपि भावनीयं, जघन्या तु सर्वत्रान्तर्मुहूर्त्तं वक्ष्यते ॥ २१५ ॥ उक्ता सामान्येन तिरश्चां स्थितिरथ पृथ्वीभेदेषु विशेषेणाह—

सण्हा य सुद्धवालुअ, मणोसिला सक्करा य खरपुढवी ।
इगबारचोद्दससोलढारबावीससमसहसा ॥ २१६ ॥

व्याख्या—श्लक्ष्णा–मरुस्थल्यादिगता पृथ्वी, शुद्धा–कुमारमृत्तिका, वालुका–सिकता, मनःशिला-प्रसिद्धा, शर्करा-ईषत्कर्करिका, खरपृथ्वी-शिलापाषाणरूपा, षण्णामप्येषां पृथ्वीभेदानां क्रमादुत्कृष्टा स्थितिरेकद्वादशचतुर्दशषोडश-अष्टादशद्वाविंशति(ः)समासहस्राः–वर्षसहस्राः ॥ २१६ ॥ अथ पञ्चेन्द्रियतिर्यग्भेदेषु स्थितिविशेषमाह—

गब्भभुअजलचरोभय, गब्भोरगपुव्वकोडिउक्कोसा ।
गब्भचउप्पय पक्खिसु, तिपलिअ पलिआअसंखंसो ॥ २१७ ॥

व्याख्या—गर्भजानां 'भुअ'त्ति भुजपरिसर्प्पाणां—गोधानकुलादीनां, तथा जलचराणां—मत्स्यादीनां, 'उभय'त्ति, गर्भजसंमूर्च्छिमानां-तथा गर्भोरगाणां च-गर्भजसर्प्पजातीयानां, पूर्वकोट्युत्कृष्टा स्थितिः, तथा गर्भजचतुष्पदानां—गवादीनां-त्रीणि पल्योपमानि, गर्भजपक्षिणां पल्योपमस्यासंख्येयो भाग उत्कृष्टा स्थितिः ॥ २१७ ॥ पूर्वकोटीत्युक्तमतः पूर्वमानमाह—

पुव्वस्स उ परिमाणं सयरिं खलु वास कोडिलक्खाओ ।
छप्पन्नं च सहस्सा, बोद्धव्वा वासकोडीणं ॥ २१८ ॥

अस्यास्तात्पर्यार्थः—चतुरशीतिर्वर्षलक्षाः पूर्वाङ्गं, तच्च पूर्वाङ्गेण गुणितं पूर्वं, तत्र च वर्षकोटीनां सप्ततिर्लक्षाः षट्प-

च्चाशत्सहस्राः कोट्यः ॥ १० ॥ (७०५६०००००००००००) ॥ २१८ ॥ अथ संमूर्च्छिमपञ्चेन्द्रियस्थलचरादीनां स्थितिमाह—

संमुच्छपणिंदिअथलखहयरुरगभुअगजिट्ठठिइ कमसो ।

वाससहस्सा चुलसी विसत्तरी तिपण बायाला ॥ २१९ ॥

व्याख्या—संमूर्छिमपञ्चेन्द्रिया ये स्थलचरा-गवादयः, खेचराः-पक्षिणो बलाकादयः, उरगाः-सर्प्पादयः, भुजगाश्च-गोधादयः, तेषां ज्येष्ठा स्थितिः क्रमाच्चतुरशीतिः, द्वासप्ततिः, त्रिपञ्चाशत्, द्विचत्वारिंशच्च वर्षसहस्राः ॥२१९॥ उक्ता सर्वतिरश्चामुत्कृष्टा स्थितिः, अथैतस्या भवस्थितिरूपतां दर्शयन् स्थितिसाम्यादेषामेव कायस्थितिमाह—

एसा पुढवाईणं भवट्ठिई संपयं तु कायठिई ।

चउ एगिंदिसु नेआ, ओसप्पिणिओ असंखेज्जा ॥ २२० ॥

व्याख्या—एषा-अनन्तरा पृथिव्यादीनां भवस्थितिरायुष्करूपा उक्तेति शेषः । साम्प्रतं पुनरेषामेव कायस्थितिः—

मृत्वा मृत्वा तत्रैव कायेऽवस्थानं, उच्यते इति शेषः । तत्र वनस्पतिवर्ज्जानां चतुर्णामेकेन्द्रियाणां प्रत्येकमुत्कृष्टा कायस्थितिरसंख्याता अवसर्प्पिण्यः, उपलक्षणत्वादुत्सर्प्पिण्यश्च ज्ञेयाः । अवसर्प्पिण्युत्सर्प्पिणीपरिज्ञानार्थं तु स्पष्टा-गाथा इमाः—"दस कोडाकोडीओ, सागरनामा हवंति पुण्णाओ । ओसप्पिणीपमाणं, तं चेवुस्सप्पिणीएवि ॥ १ ॥ छच्चेव कालसमया, हवंति ओसप्पिणीएँ भरहम्मि । तासिं नामविहात्तिं, अहक्कमं कित्तइस्सामि ॥ २ ॥ सुसमसुसमा य सुसमा, तइया पुण सुसमदुस्समा होइ । दूसमसुसमा चउत्थी, दूसमं अइदूसमा छट्ठी ॥ ३ ॥ एए चेव विभागा, हवंति उस्सपिणीइ छच्चेव । पडिलोमा परिवाडी, नवरि विभाएसु नायव्वा ॥ ४ ॥ सुसमसुसमाए कालो, चत्तारि हवंति कोडिकोडीओ । तिन्नि सुसमाएँ कालो, दुन्नि भवे सुसमदुसमाए ॥ ५ ॥ एक्का कोडाकोडी, बायालीसाएँ जा सहस्सेहिं । वासाण होइ ऊणा, दूसमसुसमाइ सो कालो ॥६॥ अह दूसमाइ कालो, वाससहस्साइँ इक्वीसं तु । तावइओ चेव भवे, कालो अइदूसमाएवि ॥७॥" द्वाभ्यां चोत्सर्प्पिण्यवसर्प्पिणीभ्यां विंशतिसागरोपमकोटीकोटीमानं द्वादशारं कालचक्रं, अरेषु चात्र कालानुभावादिस्वरूपमागमाद्बोद्धव्यं, गमनिकामात्रफलत्वात् प्रयासस्य । एतच्च कायस्थितिमानं कालतः, क्षेत्रतस्त्वेतदेव कालपरिमाणमसङ्ख्येया लोकाः, इदमुक्तं भवति—असङ्ख्येयेषु लोका-काशेषु प्रतिसमयमेकैकप्रदेशापहारेण सर्वप्रदेशापहारे यावत्योऽसङ्ख्येया उत्सर्प्पिण्यवसर्प्पिण्यो भवन्ति तावत्य इति ॥ २२० ॥ तथा—

ताउ वणंमि अणंता, संखेज्जा वाससहस विगलेसु ।
पंचिंदितिरिनरेसुं, सत्तट्ठभवा उ उक्कोसा ॥ २२१ ॥

व्याख्या—ता एवोत्सर्पिण्यवसर्पिण्योऽनन्ता वनस्पतिकायस्य स्थितिः, इयमपि कालतः, क्षेत्रतस्तु प्रागुक्तप्रकारेणानन्ताः लोका असंख्येयाः पुद्गलपरावर्त्ताः, ते चावलिकाया असंख्येयभागे यावन्तः समयास्तत्तुल्याः, इयं च स्थितिः सांव्यवहारिकानधिकृत्य, ततो न मरुदेव्यादिभिर्व्यभिचारः, तथा च क्षमाश्रमणः—"तह कायट्ठिइकालादयो विसेसे पडुच्च किर जीवे । नाणाइवणस्सइणो, जे संववहारबाहिरया ॥ १ ॥" अत्रादिशब्दात् सर्वजीवैः श्रुतमनन्तशः स्पृष्टमित्यादिग्रहः । तथा विकलानां द्वित्रिचतुरिन्द्रियाणां प्रत्येकं कायस्थितिः सङ्ख्याता वर्षसहस्राः, पञ्चेन्द्रियतिरश्चां नराणा च कायस्थितिः सप्ताष्टभवाः, तत्र यदाऽष्टौ भवाः प्राप्यन्ते तदा प्रथमेषु सप्तसु भवेषु सङ्ख्यातानि वर्षाण्यायुरष्टमे त्वसङ्ख्यातान्येव । अत एव सप्ताष्टभवा इत्युक्तमन्यथाऽष्टभवा इत्येवोच्यते । अष्टसु च भवेषूत्कर्षतः कालमानं त्रीणि पल्योपमानि पूर्वकोटीपृथक्त्वाभ्यधिकानि । तत्रापि संमूर्च्छिमतिरश्चां पूर्वकोटीपृथक्त्वं, मूर्च्छिमनराणां तु मुहूर्त्तपृथक्त्वमिति । तथा सामान्येन पञ्चेन्द्रियकायस्थितिः सातिरेकं सागरोपमसहस्रं । तच्च

नारकतिर्यग्नरामरभवभ्रमणतो बोद्धव्यं। सामान्यतस्त्रसकायस्थितिस्तु 'दो सागरोवमसहस्साइं, संखेज्जवासऽमहि-आइं' इति। एषा च पृथिव्यादीनामुक्तरूपा सर्वापि कायस्थितिरुत्कृष्टा ॥ २२१ ॥ अथ जघन्यां भवस्थितिं कायस्थितिं चाह—

सव्वेसिंपि जहन्ना, अंतमुहुत्तं भवे अ काए अ।

व्याख्या—सर्वेषामपि पूर्वोक्तानां पृथिव्यादीनां जघन्या स्थितिर्भवे च काये च अन्तर्मुहूर्तं। इह मनुष्याणां कायस्थितिः प्रस्तावादुक्ता, सुरनारकाणां तु मृत्वाऽनन्तरमेवं स्वस्थानेऽनुत्पत्तेः कायस्थितिर्नास्त्येवेति ॥ तदेवमुक्तं सप्रसङ्गं तिरश्चां स्थितिद्वारम्। अथावगाहनाद्वारमाह—

जोअणसहस्समहिअं, एगिंदिअदेहमुक्कोसं ॥ २२२ ॥
बितिचउरिंदिसरीरं, बारसजोअणतिकोसचउकोसं।
जोअणसहस पणिंदिअ, ओहे वोच्छं विसेसं तु ॥ २२३ ॥

व्याख्या—सामान्येन एकेन्द्रियाणामुत्कृष्टं देहं-शरीरं किञ्चिदधिकं योजनसहस्रं, 'नीहारहिंजीरसहस्रमेढ्रा' इति 'पुण्याहदेहा' विति च लिङ्गानुशासने पुंनपुंसकेषु पाठात्सहस्रदेहध्वनी पुन्नपुंसकौ, प्राकृते 'लिङ्गं व्यभिचार्यपी' ति

तु बालानामपि प्रतीतं । तथा द्वीन्द्रियाणां-शङ्खादीनामुत्कृष्टं शरीरं द्वादशयोजनानि । एवं त्रीन्द्रियाणां—मत्कोटादीनां त्रीणि गव्यूतानि । चतुरिन्द्रियाणां-भ्रमरादीनां चत्वारि गव्यूतानि । पञ्चेन्द्रियाणां योजनसहस्रं । एतच्च सर्वमपि शरीरमानमोघे-सामान्यचिन्तायां, विशेषं तु वक्ष्ये ॥ २२३ ॥ विशेषमेवाह—

अंगुलअसंखभागो, सुहुमनिगोओ असंखगुण वाऊ ।
तो अगणि तओ आऊ, तत्तो सुहुमा भवे पुढवी ॥ २२४ ॥

तो बायरवाउगणी, आउ पुढवी निगोअ अणुकमसो ।
पत्तेअवणसरीरं, अहिअं जोअणसहस्सं तु ॥ २२५ ॥

व्याख्या—द्वेधा वनस्पतिः-प्रत्येकः साधारणश्च, साधारणो निगोदो अनन्तकायिक इत्येकार्थाः । तत्र प्रत्येको बादर एव, पृथिव्यप्तेजोवायुनिगोदास्तु सूक्ष्मा बादराश्च, तत्राद्यन्तयोर्निगोदपृथिव्योः सूक्ष्मविशेषणात्तदन्तर्वर्त्तिनां वाय्वग्निजलानामपि सूक्ष्माणां ग्रहणादयमर्थः—सूक्ष्मनिगोदशरीरमङ्गुलस्यासङ्ख्यो भागः, अङ्गुलासंख्यातभागप्रमाणमित्यर्थः । तदसंख्यातगुणमेकं सूक्ष्मं वायुकायिकशरीरं, ततोऽसंख्यातगुणमेकं सूक्ष्मतेजस्कायिकशरीरं,

ततोऽसंख्यातगुणमेकं सूक्ष्मापूकायिकशरीरं, ततोऽप्यसंख्यातगुणमेकं बादरवायुशरीरं, ततोऽप्यसंख्यातगुणमेकं बादराग्निशरीरं, ततोऽप्यसंख्यातगुणमेकं बादराप्कायशरीरं, ततोऽप्यसंख्यातगुणमेकं बादरपृथ्वीशरीरं, तस्माद-प्यसंख्यातगुणमेकं बादरनिगोदशरीरं, स्वस्थाने तु सर्वाण्यप्यङ्गुलासङ्ख्येयभागमात्राणीति। तथा च भगवत्यामेकोनविंशतितमे शते तृतीयोद्देशकः 'के महालएणं भंते! पुढविशरीरे पण्णत्ते? गोयमा! अणंताणं सुहुमवणस्सइकाइआणं जावइआ सरीरा से एगे सुहुमवाउसरीरे। असंखेज्जाणं सुहुमवाउसरीराणं जावइआ सरीरा से एगे सुहुमतेउसरीरे। असंखेज्जाणं सुहुमतेउक्काइअसरीराणं जावइआ सरीरा से एगे सुहुमआउसरीरे। असंखेज्जाणं सुहुमआउकाइआणं जावइआ सरीरा से एगे सुहुमपुढविसरीरे। असंखेज्जाणं सुहुमपुढविकाइआणं जावइआ सरीरा से एगे बायरे वाउसरीरे। असंखेज्जाणं बादरवाउक्काइआणं जावइआ सरीरा से एगे बादरे तेउसरीरे। असंखेज्जाणं बादरतेउकाइआणं जावइआ सरीरा से एगे बादरे आउसरीरे पन्नत्ते"। अत्र 'अणंताणं सुहुमवणस्सइकाइआणं जावइआ सरीरा' इति यावद्ग्रहणादसंख्यातानि शरीराणि ग्राह्याणि, अनन्तानामपि वनस्पतीनामेकाद्यसंख्येयान्तशरीरत्वेनानन्तानां शरीराणामभावात्, सूक्ष्मवनस्पत्यवगाहनापेक्षया सूक्ष्मवाय्ववगाहनाया असंख्यातगुणत्वेन चागमेऽभिधानात्, यदुक्तमुक्तोद्देशके-'गोअमा! सव्वत्थोवा सुहुमनिगोअस्स अपज्जत्तगस्स जहन्निआ ओगाहणा, सुहुमवाउकाइअस्स अपज्जत्तगस्स जहन्निया ओगाहणा असंखेज्जगुणा, जाव बायरपुढवीअपजत्तगस्स जहन्निया असंखे-

ज्जगुणा, पत्तेयसरीरबायरवणस्सइकाइयस्स बायरनिगोअस्स य एएसिं अपज्जत्तगाणं जहन्निआ ओगाहणा दोण्ह-वि तुल्ला असंखेज्जगुणा' इत्यादि। गत्येकवनस्पतीनां तु समुद्रादिगतपद्मनालादीनां शरीरं किञ्चिदधिकं योजन-सहस्रम् ॥ २२४–२२५ ॥ ननु शरीरस्य मानमुत्सेधाङ्गुलेन, समुद्रपद्महृदादीनां तु प्रमाणाङ्गुलेन, ततः समुद्रादीनां योजनसहस्रावगाढत्वात्तद्गतपद्मनालादीनामुत्सेधाङ्गुलापेक्षयाऽत्यन्तदैर्घ्यं स्यादत आह—

उस्सेहंगुलजोअणसहस्समाणे जलासए नेअं।

तं वल्लिपउमपमुहं, अओ परं पुढविरूवं तु ॥ २२६ ॥

व्याख्या—स्पष्टा, भावनार्थं तु व्यक्ता विशेषणवतीगता इमा क्षमाश्रमणगाथा—"जोअणसहस्समहिअं, वणस्सईदेहमाणमुद्दिट्ठं। तं च किल समुद्दगयं, जलरुहनालं हवइ नन्नं ॥ १ ॥ उस्सेहंगुलओ तं होइ पमाणंगुलेण य समुद्दो। अवरोप्परओ दोन्निवि, कहमविरोहीणि हुज्जाह? ॥ २ ॥ पुढवीपरिणामाइं, ताइं किर सिरिनिवासपउमं व। गोतित्थेसु वणस्सइपरिणामाइं तु होज्जाहि ॥ ३ ॥ जत्थुस्सेहंगुलओ, सहस्समवसेसएसु अ जलेसु। वल्लीलयादओऽविअ, सहस्समायामओ होंति ॥ ४ ॥" ॥ २२६ ॥ अथ द्वीन्द्रियादीनां विशेषेणोत्कृष्टं देहमानमाह—

बारसजोअण संखो, तिकोस गुम्मीअ जोअणं भमरो।

मुच्छिमचउपयभुअगुरग, गाउअधणुजोअणपुहत्तं ॥ २२७ ॥

व्याख्या-पूर्वार्द्धं व्यक्तं, गुल्मी तु कर्णश्रृगाली त्रीन्द्रियविशेषः, तथा संमूर्च्छिमचतुष्पदा—गवादयः उत्कर्षतो गव्यूतपृथक्त्वं, संमूर्च्छिमभुजगा—गोधानकुलादयो धनुःपृथक्त्वं, संमूर्च्छिमोरगाः—सर्प्पजातीया योजनपृथक्त्वम् ॥ २२७ ॥ तथा—

गब्भचउप्पय छग्गाउआइं भुअगा उ गाउअपुहत्तं ।

जोअणसहस्समुरगा, मच्छा उभएवि अ सहस्सं ॥ २२८ ॥

व्याख्या—गर्भजचतुष्पदा—हस्त्यादयः षड्गव्यूतानि, गर्भजभुजगास्तु—गोधादयो गव्यूतपृथक्त्वं, गर्भजोरगाः—सर्प्पजातीया योजनसहस्रं, मत्स्या उभयेऽपीति गर्भजाः संमूर्च्छिमाश्च योजनसहस्रम् ॥ २२८ ॥ तथा—

पक्खिदुगधणुपुहत्तं सव्वाणंगुलअसंखभाग लहू ।

व्याख्या—पक्षिणां—गृध्रादीनां 'दुग'त्ति गर्भजानां संमूर्च्छिमानां च शरीरं धनुःपृथक्त्वं, सर्वमपि चैतदोघतो विशेषतश्च शरीरमानमुत्कृष्टं, लघु-जघन्यं पुनः शरीरं सर्वेषामप्येकद्वित्रिचतुःपञ्चेन्द्रियरूपाणां तिरश्चामङ्गुलस्यासंख्याततमो भागः, स चोपपातसमये बोद्धव्यः, तथा च मूलटीका—"एगिंदिआईणोगाहणा जहन्ना पुण सव्वे-

सिमेव उववायकाले अंगुलासंखेज्जभागमेत्ता विन्नेआ' इति । वैक्रियावगाहना तु तिरश्चां पर्याप्तबादरवायुकायिक-पर्याप्तसंख्यातायुर्गर्भजपञ्चेन्द्रियाणामेव । तथा "वाउकाअस्स जहन्नेणवि उक्कोसेणवि अंगुलस्स असंखेज्जइभागं, पंचेंदियाणं जहन्नेणं अंगुलस्स असंखेज्जइ भागं, उक्कोसेणं जोअणसयपुहत्तं" । उक्तं तिरश्चामवगाहनाद्वारम्, अथोपपातच्यवनविरहद्वारद्वयावसरः-तत्र चैकेन्द्रियाणां प्रतिसमयमुपपातच्यवनयोर्वक्ष्यमाणत्वान्नैतद्वारद्वयसम्भव इति द्वीन्द्रियादीनामुपपातच्यवनयोर्विरहमेकसमयसंख्यां चाह—

विरहो विगलासन्नीण, जम्ममरणेसु अंतमुहू ॥ २२९ ॥
गब्भे मुहुत्त बारस, गुरुओ लहु समयसंख सुरतुल्ला ।

व्याख्या-विकलानां-द्वित्रिचतुरिन्द्रियाणामसंज्ञिनां च संमूर्च्छिमपञ्चेन्द्रियतिरश्चां जन्ममरणयोः-उपपातच्यवनयोः प्रत्येकं गुरुक—उत्कृष्टो विरहकालोऽन्तर्मुहूर्त्तं 'गब्भे'त्ति' गर्भजपञ्चेन्द्रियतिरश्चामुपपातच्यवनयोर्विरहकाल उत्कृष्टो द्वादश मुहूर्त्ताः, लघुः-जघन्यो विरहकालः सर्वत्र समयः । तथैषामेव द्वीन्द्रियादीनामेकस्मिन् समये उपपाते उद्वर्त्तनायां च संख्या सुरैस्तुल्या-"इगदुतिसंखमसंखा, इगसमए हुंति अ चवंति" । अथैकेन्द्रियाणामुपपातच्यवनविरहकालो नास्तीति दर्शयन्नुत्पद्यमानानामुद्वर्त्तमानानां च विशेषतः संख्यामाह—

अणुसमयमसंखेज्जा, एगिंदिअ हुंति अ चवंति ॥ २३० ॥
वणकाइओ अणंता, एक्केक्काओवि जं निगोआओ ।
निच्चमसंखो भागो, अणंतजीवो चयइ एइ ॥ २३१ ॥

व्याख्या–इहैकेन्द्रियाः पृथिव्यप्तेजोवायुवनस्पतिभेदात्पञ्चविधाः, तत्राद्याश्चत्वारः स्वस्थानतः परस्थानतो वेत्यनपेक्ष्य सामान्यत उत्पत्तौ चिन्त्यमानाः प्रत्येकमनुसमयमसंख्याता भवन्ति-उत्पद्यन्ते, असंख्याता एव च च्यवन्ते. न पुनः समयाद्यन्तरेण, नाप्येको द्वौ त्रयः संख्याता वा । वनस्पतिकायिकास्तु स्वस्थानतः प्रतिसमयमनन्ता उत्पद्यन्ते, अनन्ता एव च च्यवन्ते । यदा तु परस्थानत एवोत्पद्यमानाश्चिन्त्यन्ते तदा प्रतिसमयमसंख्याता अप्येते लभ्यन्ते, तथाच प्रज्ञापना–" पुढविकाइआणं भंते ? एगसमएणं केवइआ उववज्जंति ? गोअमा ! अणुसमयं अविरहिआ असंखेज्जा एवं जाव वाउकाइआ, वणस्सइकाइआणं भंते ! एगसमएणं केवइआ उववज्जंति ? गोअमा ! सट्ठाणोववायं पडुच अणुसमयमविरहिआ अणंता उववज्जंति, परट्ठाणोववायं पडुच अणुसमयमविरहिआ असंखेज्जा" इति, स्वस्थानत एवोत्पद्यमानानां वनस्पतीनामानन्त्ये हेतुं दर्शयति—'एक्केक्काओवि' इत्यादि, यद्–यस्मात्कारणादेकैकस्मादपि निगोदादसंख्येयोऽभागोऽनन्तजीवात्मको नित्यम्–अविरहितं च्यवते, एति च, अयमत्र भावः-

एकैकस्यानन्तजीवात्मकस्य सूक्ष्मस्य वादरस्य वा निगोदस्यासंख्येयभागीकृतस्यैकोऽसंख्येयभागः सततमुद्वर्त्तते, एकश्चासंख्येयो भागस्तस्मिन् स्थाने सततमुत्पद्यते, सोऽपि चासंख्येयभागोऽनन्तजीवात्मकः, एवं चैकस्मिन्नपि निगोदे प्रतिसमयमुत्पद्यमाना अनन्ताः प्राप्यन्ते, किं पुनः सर्वनिगोदेष्विति ? । अथ निगोद इति किमुच्यते ?, उच्यते, अनन्तानां जीवानां साधारणमेकं स्तिबुकाकारमौदारिकं शरीरं, तैजसकार्मणे तु शरीरे प्रतिजीवं विभिन्ने, ते चानन्ता अपि जीवाः 'समगं ऊससन्ति समगं नीससन्ति, समगं आहारंति समगं नीहारंति' ॥ २३१ ॥ असंख्यातानां च निगोदानां समुदायो गोलकाकारो गोलकः, ते च गोलका असंख्येयास्तदेवाह—

गोला य असंखिज्जा, अस्संखनिगोअओ हवइ गोलो ।
एक्केकम्मि निगोए, अणंतजीवा मुणेयव्वा ॥ २३२ ॥

उक्तार्थां, तत्त्वं तु यथागमसंप्रदायं किञ्चिदुच्यते—इह द्विविधा जीवाः, सांव्यवहारिकाः असांव्यवहारिकाश्च, तत्र ये अनादिसूक्ष्मनिगोदेभ्यः उद्धृत्य शेषजीवेषूत्पद्यन्ते (ते) पृथिव्यादिविविधव्यवहारयोगात्सांव्यवहारिकाः, ये पुनरनादिकालादारभ्य सूक्ष्मनिगोदेष्वेवावतिष्ठन्ते, ते तथाविधव्यवहारातीतत्वादसांव्यवहारिकाः, तत्र सांव्यवहारिकाः सूक्ष्मनिगोदेभ्य उद्धृत्य शेषजीवेषूत्पद्यन्ते, तेभ्योऽप्युद्धृत्य केचिद्भूयोऽपि तेष्वेव निगोदेषु गच्छन्ति, परं

तत्रापि सांव्यवहारिका एव ते, व्यवहारे पतितत्वात्, तत्र चोत्कर्षतोऽवस्थानकालमानमसंख्याता उत्सर्प्पिण्यवसर्प्पिण्यः, यदागमः—“सुहुमनिगोए णं भंते ! सुहुमनिगोएत्ति कालओ किच्चिरं होइ ? गोअमा ! जहन्नेणं अंतोमुहुत्तं, उक्कोसेणं असंखेज्जं कालं, असंखेज्जाओ उस्सप्पिणिओसप्पिणीओ कालओ, खेत्तओ असंखेज्जा लोगा” इति । असंख्येयेषु लोकाकाशेषु प्रतिसमयमेकैकप्रदेशापहारेण यावत्य उत्सर्प्पिण्यवसर्प्पिण्यो भवन्ति तावत्प्रमाणाः, असंख्येया उत्सर्प्पिण्योऽवसर्प्पिण्य इत्यर्थः । बादरनिगोदकायस्थितिस्तु सप्ततिः सागरोपमकोटीकोट्यः, यदाह—“बायरनिगोएणं भंते ! पुच्छा, गोअमा ! जहन्नेणं अंतोमुहुत्तं, उक्कोसेणं सत्तरिकोडाकोडीओ” सामान्यनिगोदस्थितिमानं तु सार्द्धौ द्वौ पुद्गलपरावर्त्तौ, तथाच पञ्चसंग्रहः “साहारणाण दोसड्ढपुग्गला निविसेसाण” अत्र साधारणानां निगोदानां निर्विशेषाणां—सूक्ष्मबादरपर्याप्तापर्याप्तविशेषणरहितानामिति । तथाऽऽर्यश्यामोऽपि प्रज्ञापनायामाह—‘निगोए णं भंते ! निगोएत्ति कालओ किच्चिरं होई ? गोअमा ! जहन्नेणं अंतो मुहुत्तं, उक्कोसेणं अणंतं कालं, अणंताओ उस्सप्पिणिओसप्पिणीओ कालओ, खेत्तओ अड्ढाइज्जा पोग्गलपरिअट्टा” इति अलं प्रसङ्गेन प्रकृतं प्रस्तुमः । तदेवमुक्तनीतितोऽसंख्येयं कालं सांव्यवहारिकाः अनादिनिगोदेषु स्थित्वा भूयोऽपि शेषजीवेषु गच्छन्ति, इत्थं भूयो भूयः सांव्यवहारिका गत्यागती कुर्वन्ति, असांव्यवहारिकास्तु सदा निगोदेष्वेवोत्पत्तिमरणभाजो, न कदाचनापि त्रसा-

दिभावं लब्धवन्तः, यदुक्तं विशेषणवत्याम्—"अत्थि अणंता जीवा, जेहिं न पत्तो तसाइपरिणामो । तेवि अणंताणंता, निगोअवासं अणुवसंति ॥ १ ॥ एतदेवाह सूत्रकारः—

अत्थि अणंता जीवा, जेहि न पत्तो तसाइपरिणामो ।
उप्पज्जंति चयंति य, पुणोवि तत्थेव तत्थेव ॥ २३३ ॥

व्याख्यातार्था, केवलमस्तीति निपातो बहुवचनार्थः ॥ अथ प्रत्येकवनस्पतिष्वप्यनन्तकायिकानां संभवमाह—

सव्वोऽवि किसलओ खलु, उग्गममाणो अणंतओ भणिओ ।
सो चेव विवड्ढंतो, होइ परित्तो अणंतो वा ॥ २३४ ॥

व्याख्या—इह सर्वशब्दोऽपरिशेषवाची, ततः 'सर्वोऽपि' निःशेषोऽपि वनस्पतिः प्रत्येकः साधारणो वा उद्गच्छन् किसलयरूपः प्रथमपल्लवावस्थां प्राप्तोऽनन्तकायस्तीर्थकृद्गणधरैर्भणितः, स एव च किसलयरूपोऽनन्तकायो विवर्द्धमानः प्रत्येकोऽनन्तकायो वा भवति, प्रत्येकं चेच्छरीरं निर्वर्त्तितं तदा प्रत्येकः, साधारणं चेत्साधारणः । अथ कियतः कालादूर्ध्वं प्रत्येकः स्याद्?, उच्यते, अन्तर्मुहूर्त्तात् । निगोदानामुत्कर्षतोऽप्यन्तर्मुहूर्त्तमेवावस्थानात् ॥२३७॥ कदा पुनर्जीवस्यैकेन्द्रियत्वप्राप्तिरित आह—

जया मोहोदओ तिव्वो, अन्नाणं सुमहब्भयं ।
पेलवं वेअणीयं तु, तया एगेंदिअत्तणं ॥ २३५ ॥

व्याख्या—श्लोकोऽयं, यदा मोहोदयो—मैथुनाभिलापस्तीव्रोऽत्यन्तगाढः, अज्ञानं चानाभोगरूपं सुमहाभयम्-अतीवभैरवं, को नामाज्ञानान्न बिभेति? येन जीवः सचेतनोऽप्यचेतन इव क्रियते, तथा पेलवम्—असारम् वेदनीयम्—असातरूपमुदयप्राप्तं भवति, तदैकेन्द्रियत्वं जायते । अन्ये त्वाहुः—यदा मोहोदयः—अज्ञानोदयस्तीव्रोऽत्यन्तरौद्रः, कथमस्य रौद्रता? अत आह—अज्ञानं सुमहाभयमिति, शेषं प्राग्वत् ॥ २३५ ॥ तदेवमुक्तं तिरश्चामुपपातच्यवनयोर्विरहद्वारद्वयमेकसमयसंख्याद्वारद्वयं च, अथ के जीवास्तिर्यक्षु यान्तीति गतिद्वारमाह—

तिरिएसु जंति संखाउ, तिरिनरा जा दुकप्पदेवा उ ।
पज्जत्तसंखगब्भयबादरभूदगपरित्तेसुं ॥ २३६ ॥

तो सहसारंतसुरा, निरया य पज्जत्तसंखगब्भेसु ।

व्याख्या—संख्यातवर्षायुष एकद्वित्रिचतुःपञ्चेन्द्रियतिर्यञ्चो नराश्च एकद्वित्रिचतुःपञ्चेन्द्रियेषु तिर्यक्षु यान्ति, द्वौ कल्पौ यावद् देवास्त्विति—भवनपतिव्यन्तरज्योतिष्कसौधर्म्मेशानवासिनो देवाः पुनः पर्याप्तसंख्यातायुष्कगर्भ-

जतिर्यक्षु पर्याप्तबादरपृथिव्यप्कायिकेषु पर्याप्तप्रत्येकवनस्पतिषु च गच्छन्ति, तत ऊर्ध्वं सनत्कुमारादयः सहस्रा-सन्ताः सुरा नैरयिकाश्च पर्याप्तसंख्यातायुष्कगर्भजेष्वेव तिर्यक्षूत्पद्यन्त इति ॥ उक्तं तिरश्चां गतिद्वारम्, अथैते तिर्यञ्चः स्वभवादुद्वृत्ताः क्वागच्छन्तीत्यागतिद्वारं तद्विशेषभूतं केषांचिल्लब्धिविशेषं चाह—

संखपणिंदिअतिरिआ, मरिउं चउसुवि गइसु जंति ॥ २३७ ॥

थावरविगला निअमा, संखाउअतिरिनरेसु गच्छंति ।
विगला लभेज्ज विरइं, सम्मंपि न तेउवाउचुआ ॥ २३८ ॥

व्याख्या—संख्यातायुषः पञ्चेन्द्रियतिर्यञ्चो मृत्वाऽनन्तरं मोक्षमेकं विमुच्य शेषासु चतसृष्वपि नारकतिर्यग्नरामररूपासु गतिषु यान्ति, स्थावरा एकेन्द्रियाः, विकलाश्च-द्वित्रिचतुरिन्द्रिया मृत्वा नियमात्संख्यातायुष्कतिर्यङ्नरेष्वेव गच्छन्ति, न देवनारकासंख्यातायुस्तिर्यङ्नरेषु, लब्धिश्चैषामेवं-विकला द्वित्रिचतुरिन्द्रियाः स्वभवाच्च्युता अनन्तरभवे मनुष्या भूत्वा लभेरन् सर्वसावद्यविरतिं, न पुनः सिध्यन्ति, तेजोवायुकायिकास्तु स्वभवाच्च्युता अनन्तरं मानुषत्वाप्राप्तेस्तिर्यक्पञ्चेन्द्रिया अपि जाताः सम्यक्त्वमपि न लभन्ते, तथा भवस्वाभाव्यात्, शेषास्तु संमूर्छिमग-

र्भजाः पञ्चेन्द्रियतिर्यङ्नराः पृथिव्यम्बुवनस्पतयश्चानन्तरभवे सिद्धिमप्यासादयन्ति ॥ २६८ ॥ अथ तिरश्चां लाघ-
वार्थमत्रैव मनुष्याणां च लेश्या आह—

पुढविदगपरित्तवणा, बायरपज्जत्त हुंति चउलेसा ।
गब्भयतिरिअनराणं, छल्लेसा तिन्नि सेसाणं ॥ २३९ ॥

व्याख्या—बादरपर्याप्ताः-पृथिव्युदकप्रत्येकवनस्पतयश्चतुर्लेश्याः, बादरविशेषणं च प्रत्येकवनस्पतीनां स्वरूपोप-
दर्शकं, व्यभिचाराभावात्, तेनायमर्थो—बादरपर्याप्तविशेषणविशिष्टाः पृथ्वीकायिकाः अप्कायिकाः प्रत्येकवनस्पतिका-
यिकाश्च कृष्णनीलकापोततेजोलेश्यावन्तो भवन्ति, गर्भजतिर्यङ्नराणां षडपि लेश्याः, तेषामनवस्थितलेश्याकत्वात् ।
शेषाणां तेजोवायूनां सूक्ष्मपृथिव्यम्बूनां साधारणानामपर्याप्तबादरपृथिव्यम्बूनामपर्याप्तप्रत्येकानां द्वित्रिचतुरिन्द्रि-
याणां संमूर्च्छिमपञ्चेन्द्रियतिर्यङ्नराणां च तिस्रः कृष्णनीलकापोतनामानो लेश्याः, भूजलवनस्पतिषु च तेजोलेश्या-
वतामीशानान्तदेवानामुत्पादात् कियन्तमपि कालं तेजोलेश्यासम्भवः, यल्लेश्या हि जन्तवो म्रियन्ते परभवेऽपि
तल्लेश्या एवोत्पद्यन्ते, न पुनःपाश्चात्यभवान्त्यसमयेऽन्यो लेश्यापरिणामोऽन्यश्चागामिभवाद्यसमये, यदागमः—"जल्ले-
साइं दव्वाइं आयइत्ता कालं करेइ, तल्लेसेसु उववज्जइ" त्ति, तथा च किमागामिभवलेश्यादिसमये परभवायुष

१ प्रथमसमये

उदय आहोश्वित् प्राग्भवलेश्यान्त्यसमये उतान्यथेति संशयापनोदार्थं भद्रबाहुस्वाम्याह—लेसाहिं सव्वाहिं, पढमे समयंमि परिणयाहिं तु। न हु कस्सइ उववाओ, परभवे होइ जीवस्स ॥१॥ लेसाहिं सव्वाहिं, चरमे समयंमि परिणयाहिं तु। न हु कस्सइ उववाओ, परे भवे होइ जीवस्स ॥ २ ॥ अंतमुहुत्तंमि गए, अंतमुहुत्तंमि सेसए चेव। लेसाहिं परिणयाहिं, जीवा वच्चंति परलोअं ॥ ३ ॥ व्याख्या-लेश्याभिः-उक्तरूपाभिः, सर्वाभिरिति-षड्भिरपि प्रथमे समये तत्प्रतिपत्तिकालापेक्षया, परिणताभिः-प्रस्तावादात्मरूपतामापन्नाभिः 'लक्षणे तृतीया' तुः पूरणे, नहु नैव कस्यापि जन्तोः परभवे उत्पत्तिर्भवति। तथा लेश्याभिः सर्वाभिरन्त्यसमये परिणताभिर्न कस्यापि परभवे उत्पत्तिः। किं तर्हि ? अन्तर्मुहूर्त्ते गते एव—अतिक्रान्त एव, यदि वा अन्तर्मुहूर्त्ते शेषके चैवावतिष्ठमान एव लेश्याभिरुपलक्षिता जीवाः परलोकं गच्छन्ति। केवलं तिर्यङ्नरा आगामिभवसम्बन्धिलेश्याया अन्तर्मुहूर्त्तेऽतिक्रान्ते सुरनारकास्तु स्वभवसम्बन्धिलेश्याया अन्तर्मुहूर्त्ते शेषे सति परभवमासादयन्ति ॥ २३९ ॥ एतदेवाह—

तिरिनरआगामिभवल्लेसाए अइगए सुरा निरया।
पुव्वभवलेससेसे, अंतमुहुत्ते मरणमिंति ॥ २४० ॥

भावितार्थो। ततः स्थितमिदम्–पृथिव्यब्वनस्पतिषु तेजोलेश्यापरिणतदेवानामुत्पत्तेः कियत्कालं तेजोलेश्यासद्भाव इति ॥ २४० ॥ अथ तिर्यङ्नरसम्बन्धिलेश्यानां स्थितिमाह—

अंतमुहुत्तट्ठिई उ, तिरिअनराणं हवंति लेसाओ ।
चरमा नराण पुण नववासूणा पुव्वकोडीवि ॥ २४१ ॥

व्याख्या–तिरश्चां—पृथ्वीकायिकादीनां, नराणां संमूर्च्छिमगर्भजानां, याः काश्चिल्लेश्याः सम्भवन्ति, ताः प्रत्येकं जघन्यत उत्कर्षतश्चान्तर्मुहूर्त्तस्थितयो भवन्ति, नराणां पुनश्चरमा–शुक्लेश्या उत्कर्षतः किञ्चिन्न्यूननववर्षोनपूर्वकोटीप्रमाणापि, इयं चोत्कृष्टा स्थितिः पूर्वकोटेरूर्ध्वं संयमावाप्तेरभावान् पूर्वकोट्यायुषः किञ्चित्समधिकवर्षाष्टकादूर्ध्वमुत्पादितकेवलज्ञानस्य केवलिनोऽवसेया । शेषाणामुत्कर्षतोऽप्यन्तर्मुहूर्त्तावस्थानैवेति ॥ २४१ ॥ उक्ते तिरश्चां सप्रपञ्चे गत्यागती, तदभिधानाच्चाभिहितं तिर्यग्द्वारम्, अथैतदेवोपसंहरन् वक्ष्यमाणवक्तव्यतां सम्बन्धयन्नाह—

---

१ गर्भनवमासयुतः यद्यपि कश्चित्पूर्वकोट्यायुरष्टवार्षिक एव व्रतपरिणाममाप्नोति, तथापि नैतावद्वयःस्थस्य वर्षपर्यायादर्वाक् शुक्ललेश्यायाः सम्भव इति नवभिः वर्षैर्न्यूना पूर्वकोटिरुच्यते उत्तरा० बृहद्वृत्तौ ।

तिरिआणवि ठिइपमुहं, मणिअमसेसंपि सम्पयं वोच्छं ।
अभिहिअदारब्भहिअं, चउगइजीवाण सामन्नं ॥ २४२ ॥

व्यक्ता । तत्र देवादीनां वेदस्वरूपमाह—

देवा असंखनरतिरि, इत्थीपुंवेअ गब्भनरतिरिआ ।
संखाउआ तिवेआ, नपुंसगा नारयाईआ ॥ २४३ ॥

व्याख्या—देवा असंख्यातायुर्नरतिर्यञ्चश्च स्त्रीपुंवेदा भवन्ति, स्त्रीवेदाः पुंवेदाश्चेत्यर्थः । तथा गर्भजनरतिर्यञ्चः संख्यातायुषस्त्रिवेदाः–स्त्रीपुंनपुंसकवेदाः, नारका आदिशब्दाच्छेषा एकद्वित्रिचतुरिन्द्रियाः संमूर्च्छिमतिर्यङ्नराश्च नपुंसकाः ॥ २४३ ॥ अथ प्रागुक्तविमानादिकं यद्येनाङ्गुलेन मीयते तदाह—

आयंगुलेण वत्थुं, सरीरमुस्सेहअंगुलेण तहा ।
नगपुढविविमाणाई, मिणसु पमाणंगुलेणं तु ॥ २४४ ॥

व्याख्या—अगिरगीत्यादिदण्डकेऽगिर्गत्यर्थो धातुः, गत्यर्थाश्च ज्ञानार्था अपि भवन्ति, अतोऽङ्ग्यन्ते–प्रमाणतो

ज्ञायन्ते पदार्था अनेनेत्यङ्गुलं-मानविशेषः, तच्च त्रिविधम्-आत्माङ्गुलमुत्सेधाङ्गुलं प्रमाणाङ्गुलं च, तत्रात्माङ्गुलेन वास्तु मिमीष्व, तच्च त्रिधा-खातमुच्छ्रितमुभयं च, तत्र खातं कूपभूमिगृहतडागादि, उच्छ्रितं धवलगृहादि, उभयं भूमिगृहादियुक्तधवलगृहादि। तथा देवादीनां शरीरमुत्सेधाङ्गुलेन मिमीष्व, प्रमाणाङ्गुलेन पुनर्नगपृथिवीविमानादीनि मिमीष्व, तत्र नगा—मेर्वाद्याः, पृथिव्यो-घर्माद्याः, विमानानि-सौधर्मावतंसकादीनि, आदिशब्दाद्भवननरकावासद्वीपसमुद्राद्यपि प्रमाणाङ्गुलेन मिमीष्व ॥ २४४ ॥ अथात्माङ्गुलादिस्वरूपं किञ्चिदुच्यते—तत्र ये यस्मिन् काले भरतसगरादयो मनुष्याः प्रमाणयुक्ता भवन्ति तेषां यदात्मीयमङ्गुलं तदात्माङ्गुलम्, इदं च पुरुषाणां कालादिभेदेनानवस्थितमानत्वादनियतम्। उत्सेधो-देवादिशरीराणामुच्चत्वं, तन्निर्णयार्थमङ्गुलमुत्सेधाङ्गुलं, यथा—उत्सेधो—'अणंताणं सुहुमपरमाणुपुग्गलाणं समुदयसमिइसमागमेणं एगे ववहारपरमाणू' इत्यादिक्रमेणोच्छ्रयो वृद्धिस्तस्माज्जातमङ्गुलमुत्सेधाङ्गुलं, तथाहि-द्विधा परमाणुः-सूक्ष्मो व्यावहारिकश्च, तत्रानन्तैः सूक्ष्मैः परमाणुभिर्विस्रसातोऽत्यन्तनिचितैरेको व्यावहारिकः परमाणुर्निष्पद्यते ॥ २४४ ॥ तस्य स्वरूपमाह—

सत्थेण सुतिक्खेणवि, छित्तुं भित्तुं व जं किर न सक्का।
तं परमाणुं सिद्धा, वयंति आइं पमाणाणं ॥ २४५ ॥

व्याख्या—'शस्त्रेण' खड्गादिना सुतीक्ष्णेनापि 'छेत्तुं' द्विधाकर्त्तुं 'भेत्तुं वा' खण्डशो विदारयितुं सच्छिद्रं वा कर्त्तुं 'यं' पुद्गलविशेषं न शक्ताः पुमांसस्तं 'परमाणुं' घटाद्यपेक्षयाऽतिसूक्ष्मं 'सिद्धाः' सैद्धान्तिकतया प्रसिद्धा यद्वा ज्ञानसिद्धाः-केवलिनो 'वदन्ति' ब्रुवते प्रमाणानामङ्गुलहस्तादीनाम् 'आदिं' मूलम् । अत्र किलशब्देनेदं सूच्यते-लक्षणमेवेदं परमाणोर्न पुनस्तं छेत्तुं भेत्तुं वा कोऽप्यारभत इति।एते चानन्ताः परमाणवः एका अतिशयेन श्लक्ष्णा श्लक्ष्णश्लक्ष्णा सैव श्लक्ष्णश्लक्ष्णिका, उत्तरप्रमाणापेक्षया उत्प्रावल्येन श्लक्ष्णश्लक्ष्णिका उच्छ्लक्ष्णश्लक्ष्णिका, ता अष्टावेका श्लक्ष्णश्लक्ष्णिका, प्राक्तनप्रमाणापेक्षया अष्टगुणत्वादूर्ध्वरेण्वपेक्षया त्वष्टमभागवर्त्तित्त्वात्, ता अप्यष्टावेक ऊर्ध्वरेणुः, ते अष्टौ त्रसरेणुः, ते अष्टौ रथरेणुः, ते अष्टौ देवकुरूत्तरकुरुमनुष्याणामेकं वालाग्रं, तान्यष्टौ हरिवर्षरम्यकमनुष्याणां वालाग्रं, तान्यष्टौ लिक्षा, सा अष्टगुणा यूका, यूका अष्टगुणा यवमध्यं, यवमध्यान्यप्यष्टावेकमुत्सेधाङ्गुलं, षडङ्गुलानि पादः, द्वौ पादौ वितस्तिः, द्वे वितस्ती हस्तः, चत्वारो हस्ता धनुः, द्वौ धनुःसहस्रौ गव्यूतं, चत्वारि गव्यूतानि योजनं ॥ २४५ ॥ एतदेव गाथाद्वयेनाह—

परमाणू तसरेणू, रहरेणू वालअग्गलिक्खा य ।
जूअ जवो अट्ठगुणो, कमेण उस्सेहअंगुलयं ॥ २४६ ॥

अंगुलछक्कं पाओ, सो दुगुण विहत्थि सा दुगुण हत्थो ।
चउहत्थं धणु दुसहस, कोसो ते जोअणं चउरो ॥ २४७ ॥

व्याख्या—अत्र परमाणोरनन्तरमुच्छ्लक्ष्णश्लक्ष्णिकादीनि त्रीणि पदानि, तथा वालाग्रमिति सामान्याभिधानेऽपि देवकुरूत्तरकुरुहरिवर्षरम्यकादिनिवासिनां मानवानां, क्रमेण क्षेत्रशुभानुभावहानेः, केशगतस्थूलताविशेषश्चानुक्तोऽपि बोद्धव्यः, अनुयोगद्वारादिषु तथैवाभिधानात् , तत्र जालप्रविष्टसूर्यप्रभाभिव्यङ्ग्यः स्वतः परतो वा ऊर्ध्वाधस्तिर्यक्चलनधर्मा रेणुरूर्ध्वरेणुः, त्रस्यति पूर्वादिवातप्रेरितो गच्छति यो रेणुः स त्रसरेणुः, रथचक्रोत्खातो रेणू रथरेणुः, पश्चाग्रेतनसंग्रहण्यां बहुषु च जीवसमाससूत्रादर्शेषु 'परमाणू रहरेणू तसरेणू' इत्यादिरेव पाठः, सोऽसंगत एव लक्ष्यते, आगमेन विरोधात्, युक्त्यसंगतत्वाच्चेति, शेषं व्यक्तं ॥ २४६॥२४७ ॥ अथ प्रमाणाङ्गुलमाह—

चउसयगुणं पमाणंगुलमुस्सेहंगुलाओ बोद्धव्वं ।
उस्सेहंगुलदुगुणं, वीरस्सायंगुलं भणिअं ॥ २४८ ॥

व्याख्या—चतुःशतगुणितादुत्सेधाङ्गुलप्रमाणाज्जातं परमप्रकर्षरूपं प्रमाणं वा प्राप्तं समस्तलोकस्थितेः प्रथमप्रणेतृत्वेनास्यामवसर्पिण्या युगादिदेवो भरतो वा प्रमाणभूतस्तस्याङ्गुलं प्रमाणाङ्गुलं, तच्च प्रागुक्तादुत्सेधाङ्गुलाच्चतुःशत-

प्रमाणाङ्गुले उत्सेधाङ्गुलानां चत्वारि शतानि भवन्तीत्यर्थः। इयमत्र भावना—उत्सेधाङ्गुला-
गुणं बोद्धव्यं, एकस्मिन् प्रमाणाङ्गुले उत्सेधाङ्गुलानां चत्वारि शतानि भवन्तीत्यर्थः। तथाहि—सर्वेऽपि तीर्थकृच्चक्रवर्त्तिवासुदेवबलदेवा आत्मा-
त्प्रमाणाङ्गुलं दैर्घ्यतश्चतुःशतगुणं विष्कम्भतस्त्वर्द्धतृतीयगुणं, तथाहि—सर्वेऽपि तीर्थकृच्चक्रवर्त्तिवासुदेवबलदेवा आत्मा-
ङ्गुलेन विंशत्युत्तरं शतं, यत् पुनरनुयोगद्वारसूत्रं, 'होंति पुण अहिअपुरिसा, अट्ठसयं अंगुलाण उविद्धा' तच्छेषप्र-
धानपुरुषापेक्षं, भरतचक्रवर्त्ती प्रमाणाङ्गुलेनात्माङ्गुलेन च विंशं शतमङ्गुलानां, तदात्माङ्गुलस्य प्रमाणाङ्गुलस्य च तुल्य-
त्वात् , उत्सेधाङ्गुलेन तु पञ्चधनुःशतानि, प्रतिधनुश्च षण्णवत्यङ्गुलभावादष्टाचत्वारिंशदङ्गुलसहस्राः ४८०००, तेषां
विंशत्यधिकशतेन भागे हृते आगतमेकस्मिन् प्रमाणाङ्गुले उत्सेधाङ्गुलानां चत्वारि शतानि ४००, ततः सिद्धं दैर्घ्येण
प्रमाणाङ्गुलं उत्सेधाङ्गुलाच्चतुःशतगुणमेवेति। यदा तूत्सेधाङ्गुलविष्कम्भादर्द्धतृतीयगुणेन निजविष्कम्भेण प्रमाणाङ्गुलगतं
शतचतुष्टयदैर्घ्यं गुण्यते, तदैकाङ्गुलविष्कम्भं सहस्राङ्गुलदैर्घ्यं प्रमाणाङ्गुलं जायते। इदमुक्तं भवति—अर्द्धतृतीयाङ्गु-
लविष्कम्भे प्रमाणाङ्गुले तिस्रः श्रेणयः कल्प्यन्ते, प्रथमा एकाङ्गुलविष्कम्भा शतचतुष्टयदीर्घा, द्वितीयाऽपि ताव-
न्मानैव, तृतीयाऽपि दैर्घ्येण चतुःशतमानैव विष्कम्भतस्त्वर्द्धाङ्गुलं, ततोऽस्या अपि दैर्घ्याच्छतद्वयं गृहीत्वा विष्क-
म्भोऽङ्गुलप्रमाणः सम्पाद्यते, तथा च सत्यङ्गुलशतद्वयदीर्घा अङ्गुलविष्कम्भा इयमपि सिद्धा, ततस्तिसृणामप्येतासा-
मुपर्युपरि व्यवस्थापने उत्सेधाङ्गुलतोऽङ्गुलसहस्रदीर्घमुच्यते, वस्तुतस्तु चतुःशतगुणदीर्घमेव, अत एव पृथ्वीपर्वत-
विमानादीन्यनेनैवार्द्धतृतीयाङ्गुलविष्कम्भेण चतुःशतदैर्घ्येण प्रमाणाङ्गुलेन मीयन्ते, नत्वेकाङ्गुलविष्कम्भेण सहस्रगुण-

दैर्घ्येणेति । तथा उत्सेधाङ्गुलं द्विगुणं वीरस्य भगवतः—अपश्चिमतीर्थकृत एकमात्माङ्गुलं भणितं, वर्द्धमानस्वामी हि भगवानादेशान्तरादात्माङ्गुलेन चतुरशीतिरङ्गुलानि, उत्सेधाङ्गुलतस्तु सप्तहस्तमानत्वादष्टषष्ट्यधिकं शतं । तथा चानुयोगद्वारचूर्णिः—"वीरो आएसंतरओ, आयंगुलेण चुलसीइ अंगुलमुव्विद्धो, उस्सेहंगुलओ सयमट्ठसट्ठं हवइ" इति। ततो द्वे उत्सेधाङ्गुले वीरस्यैकमात्माङ्गुलं भवति, येषां तु भगवानात्माङ्गुलेन विंशत्यधिकमङ्गुलशतं स्वहस्तेन पञ्चहस्तत्वात्, तेषां मते भगवत एकस्मिन्नात्माङ्गुले एकमुत्सेधाङ्गुलं,द्वितीयस्य च द्वौ पञ्चभागौ १ २/५। अष्टषष्टशतस्य विंशत्यधिकशतेन भागहारे छेद्यच्छेदकराश्योश्चतुर्विंशत्याऽपवर्त्तने च इयतो लाभात्, त्रैराशिकाद्वा, तथाहि यदि विंशत्युत्तरशतेन अष्टषष्ठ्यधिकमुत्सेधाङ्गुलशतं लब्धं, तत एकेनात्माङ्गुलेन किं लभ्यते ? राशित्रयस्थापना ।१२०।१६८।१। अत्रान्त्येनैककेन गुणितो मध्यराशिस्तावानेव, तत आद्येन राशिना विंशत्युत्तरशतेन भागे लब्धमेकमङ्गुलं, स्थिता अष्टाचत्वारिंशत्, ततश्छेद्यच्छेदकराश्योश्चतुर्विंशत्याऽपवर्त्तने लब्धौ द्वौ पञ्चभागौ । यन्मते तु भगवानष्टोत्तरशताङ्गुलः, स्वहस्तेन सार्द्धहस्तचतुष्टयत्वात्, तन्मते भगवत एकस्मिन्नात्माङ्गुले एकमुत्सेधाङ्गुलं पञ्च च नवभागाः १ ५/९ । भागहारस्त्रैराशिकं वा प्राग्वत् द्वादशभिस्त्वपवर्त्तना । तदेवमाद्यमतमपेक्ष्य उत्सेधाङ्गुलाद् भगवदात्माङ्गुलं द्विगुणमित्युक्तं, प्रभूतमत्र वक्तव्यं तच्च नोच्यते, ग्रन्थविस्तरभयात् ॥ २४८ ॥ अथ जीवानां योनिसंख्यां गाथाद्वयेनाह—

पुढवाइसु पत्तेअं, सग वणपत्तअणंत दसचउदस ।
विगले दुदु सुरनारयतिरि चउचउ चउदस नरेसु ॥ २४९ ॥

जोणीण होंति लक्खा, सवे चुलसी इहेव घेप्पंति ।
समवण्णाइसमेआ, एगत्तेणेव सामन्ना ॥ २५० ॥

व्याख्या—पृथिव्यप्तेजोवायुकायिकानां प्रत्येकं सप्त सप्त योनीनां लक्षा भवन्ति, एवं प्रत्येकवनस्पतिकायस्य दश, अनन्तवनस्पतिकायस्य चतुर्दश, 'विगले'त्ति द्वित्रिचतुरिन्द्रियाणां प्रत्येकं द्वे द्वे, सुराणां नारकाणां पञ्चेन्द्रियतिरश्चां च प्रत्येकं चतस्रश्चतस्रः, नराणां चतुर्दश, सर्वमीलने चतुरशीतिर्योनिलक्षाः भवन्ति, तैजसकार्मणशरीरवन्तः सन्तो जीवा औदारिकादिशरीरप्रायोग्यपुद्गलस्कन्धैर्मिश्रीभवन्त्यास्विति योनयः-उत्पत्तिस्थानानि, ताश्च प्रतिजीवनिकायं वर्णगन्धरसस्पर्शभेदादनेकविधाः सत्य उक्तसङ्ख्या भवन्ति । इह च यद्यपि व्यक्तितोऽनन्ता भेदास्तथापि समानवर्णगन्धरसस्पर्शा बहवोऽपि ते 'सामन्न'त्ति जातिरूपाः सन्त एकयोनिजातित्वेन 'इहेव'त्ति चतुरशीतिसंख्यास्वेव योनिष्वन्तर्गता गृह्यन्ते । उक्तं च—"समवण्णाइसमेआ, बहवोऽविहु जोणिभेअलक्खाउ । सामन्ना घेप्पंतिह, एक्कगजोणीएँ

गहणेणं॥१॥" ॥२४९॥२५०॥ उक्ता योनयोऽथ कुलसंख्याऽभिधातव्या, कुलानि च योनिप्रभवानि, तथाहि—यथैकस्मिन् छगणपिण्डे कृमीणां कीटानां वृश्चिकादीनां च बहूनि कुलानि भवन्ति, तथैकस्यामपि योनौ विभिन्नजातीयानि प्रभूतानि कुलानि, तत्र कस्मिन् जीवनिकाये कति कुलकोट्य इति सार्द्धगाथाद्वयेनाह—

एगिंदिसु पंचसु बार सत्त तिअ सत्त अट्ठवीसा य ।
विअलेसु सत्त अड नव, जलखहचउपयउरगभुअगे ॥ २५१ ॥
अद्धत्तेरस बारस, दस दस नवगं नरामरे नरए ।
बारसछवीस पणवीस, हुंति कुलकोडिलक्खाइ ॥ २५२ ॥
इगकोडिसत्तनवई, लक्खा सड्ढा कुलाण कोडीणं ।

व्याख्या—षष्ठीसप्तम्योरर्थं प्रत्यभेदात् पञ्चानामेकेन्द्रियाणां पृथिव्यप्तेजोवायुवनस्पतिकायरूपाणां यथासंख्यं द्वादश सप्त त्रीणि सप्त अष्टाविंशतिश्च कुलकोटीनां लक्षाणि भवन्ति, तथा 'विगलेसु'त्ति द्वित्रिचतुरिन्द्रियरूपाणां त्रयाणां विकलेन्द्रियाणां क्रमात्सप्त अष्ट नव च कुलकोटिलक्षाणि, जलचरखचरचतुष्पदउरगभुजगानां पञ्चानां

क्रमादर्द्धत्रयोदश द्वादश दशदश नव च कुलकोटिलक्षाणि, नरामरनारकाणां क्रमात् द्वादश पड्विंशतिः पञ्चविंश-तिश्च कुलकोटिलक्षाणि, सर्वसंख्यया कुलकोटीकोटी सप्तनवतिर्लक्षाः पञ्चाशत्सहस्राः ॥ साम्प्रतं योनीनामेव संवृतादिभेदानाह—

संवुडजोणि सुरेगिंदिनारया विअड विगल गब्भुभया ॥ २५३ ॥

व्याख्या—सुराश्चतुर्विधा, एकेन्द्रियाः पृथिव्यप्तेजोवायुवनस्पतयो, नारकाश्च पृथ्वीसप्तकवर्त्तिनः संवृतयोनयः, स्पष्टमनुपल-
तत्र देवानां संवृता योनिर्देवशयनीये देवदूष्यान्तरितानां तेपामुत्पादात्, एकेन्द्रियाणां संवृता योनिः
क्ष्यमाणत्वात्, नारकाणां तु संवृता योनिः संवृतगवाक्षकल्पत्वात् । विकला द्वित्रिचतुरिन्द्रियसंमूर्च्छिमपञ्चेन्द्रिय-तिर्यङ्नरा विवृतयोनयः, तेपामुत्पत्तिस्थानस्य जलाशयादेः स्पष्टमुपलक्ष्यमाणत्वात्, गर्भजाः पञ्चेन्द्रियतिर्यङ्नराः संवृतविवृतोभययोनयः, गर्भस्य संवृतविवृतरूपत्वात्, गर्भो ह्यन्तःस्वरूपतो नोपलक्ष्यते, बहिस्तूदरवृद्ध्यादिनोपलक्ष्यत इति ॥ २५१–२५३ ॥ तथा—

अच्चित्तजोणि सुरनिरय, मीस गब्भे तिभेअ सेसाणं ।
सीउसिण णिरय सुरगब्भ, मीस तेउसिण सेस तिहा ॥ २५४ ॥

व्याख्या—सुराणां निरयाणां च योनिः अचित्ता—सर्वथा जीवप्रदेशविप्रमुक्ता, यद्यपि च सूक्ष्मैकेन्द्रियाः सकललोकव्यापिनस्तथापि न तत्प्रदेशैरुपपातस्थानपुद्गला अन्योऽन्यानुगमेन सम्बद्धा इत्यचित्तैव तेषां योनिः, 'गब्भे' त्ति गर्भजतिर्यङ्नराणां योनिर्मिश्रा—सचित्ताचित्तरूपा, तथाहि—ये शुक्रमिश्राः शोणितपुद्गला योन्याऽऽत्मसात्कृतास्ते सचित्ता, अन्ये त्वचित्ताः, शेषाणां—देवनारकगर्भजतिर्यङ्नरव्यतिरिक्तानामेकद्वित्रिचतुरिन्द्रियसंमूर्च्छिमतिर्यङ्नराणां योनिस्त्रिभेदा—सचित्ता अचित्ता मिश्रा च। तत्र जीवति गवादावुत्पद्यमानानां कृम्यादीनां सचित्ता, अचित्ते काष्ठे घुणादीनामचित्ता, सचित्ताचित्ते काष्ठगोक्षतादौ घुणकृम्यादीनामिव मिश्रेति। तथा निरयाणां योनिः शीता उष्णा च, तत्राद्यासु उष्णवेदनासु तिसृषु पृथ्वीषु शीता, चतुर्थ्यां बहुषूपरितनेषूष्णवेदनेषु नरकावासेषु शीता, अधः स्तोकेषु शीतवेदनेषूष्णा, पञ्चम्यां बहुषु शीतवेदनेषूष्णा, स्तोकेषूष्णवेदनेषु शीता, षष्ठीसप्तम्योश्च शीतवेदनयोर्नारकाणां योनिरुष्णैव, शीतयोनिकानां ह्युष्णवेदना अत्यन्तदुःसहा, उष्णयोनिकानां तु शीतवेदनेति। अन्ये त्वाहुः—आद्यपृथ्वीत्रये उष्णा, चतुर्थ्यां क्वचिदुष्णा क्वचिच्छीता, अन्त्यपृथ्वीत्रये तु शीता योनिरिति, तच्च नातिश्लिष्टमित्युपेक्षणीयम्। तथा सुराणां गर्भजतिर्यङ्नराणां च मिश्रा—शीतोष्णरूपोभयस्वभावा, तेजस्कायिकानामुष्णा, शेषाणां—पृथिव्यम्बुवायुवनस्पतिसंमूर्च्छिमतिर्यङ्नराणां त्रिधा—केषाञ्चिच्छीता केषाञ्चिदुष्णा केषाञ्चित् मिश्रेति ॥ २५४ ॥ अथ मनुष्याणां योनिविशेषमाह—

हयगब्भ संखवत्ता, जोणी कुम्मुन्नयाइ जायंति ।
अरिहहरिचक्किरामा, वंसीपत्ताइ सेसनरा ॥ २५५ ॥

व्याख्या—त्रिविधा योनिर्मनुष्याणां, तद्यथा शङ्खावर्त्ता कूर्म्मोन्नता वंशीपत्रा च, तत्र शङ्खस्येवावर्त्तो यस्यामिति शङ्खावर्त्ता, कूर्म्मपृष्ठमिवोन्नता कूर्म्मोन्नता, संयुक्तवंशी ( पत्रेव वंशी ) पत्रा, तासु च शङ्खावर्त्ता हतगर्भा—नियमादस्यामुत्पन्नोऽपि गर्भो निष्पत्तिं न याति, अतिप्रवलकामाग्निपरितापतो ध्वंसत इति वृद्धवादः, इयं च योनिः स्त्रीरत्नस्य वोद्धव्या, तथा च प्रज्ञापना—“संखावत्ता णं जोणी इत्थिरयणस्स” तथा अर्हन्तो वासुदेवाश्चक्रवर्त्तिनो वलदेवाश्च कूर्म्मोन्नतायामेव जायन्ते, वंशीपत्रायां तु शेषनराः—सामान्यमनुष्या एव जायन्त इत्यर्थः ॥ २५५ ॥ अथायुर्गतं किञ्चिद्विशेषमाह—

आउस्स बंधकालो, अबाहकालो अ अंतसमओ अ ।
अपवत्तणपणवत्तण, उवक्कमणुवक्कमा भणिआ ॥ २५६ ॥

व्याख्या—आयुषः सप्त स्थानानि यथायोगं प्रवर्त्तन्ते, तत्र बन्धयोग्यः कालो बन्धकालो यावति जीवितव्यभागे शेषे

परभवायुर्बध्यते १, अबाधा-अपान्तरालं तत्कालोऽबाधाकालः बद्धं सत्परभवायुर्यावन्तं कालं नोदयमायाति २, अन्तसमयः--अनुभूयमानमायुर्यत्र निष्ठां याति ३, अपवर्त्तनं--दीर्घकालवेद्यस्यायुषः स्वल्पकालवेद्यतापादनं ४, अनपवर्त्तनं--यथावस्थितिकं पुरा बद्धं तस्य तावत्स्थितिकस्यैवानुभवनं, न तु स्थितिह्रासापादनं ५, उपक्रम्यतेऽपवर्त्यते आयुर्येन स उपक्रमः--अपवर्त्तनकारणकलापः ६, तद्विपरीतोऽनुपक्रमः ७ ॥ २५६ ॥ एते च बन्धकालादयो येषां जीवानां यथा भवन्ति तथा प्रतिपिपादयिषुर्बन्धकालं तावद्गाथाद्वयेनाह—

बंधंति देवनारय असंखतिरिनर छमाससेसाऊ ।
परभविआउं सेसा, निरुवक्कम तिभागसेसाऊ ॥ २५७ ॥
सोवक्कमाउआ पुण, सेसतिभागे अहव नवभागे ।
सत्तावीसइमे वा, अंतमुहुत्तंतिमे वावि ॥ २५८ ॥

व्याख्या—देवा नारका असंख्यातवर्षायुस्तिर्यङ्नराश्च षण्मासशेषायुषः सन्तः पारभविकमायुर्बध्नन्ति, शेषाः--संख्यातायुस्तिर्यङ्नरा एकद्वित्रिचतुःपञ्चेन्द्रिया निरुपक्रमायुषो नियमतः स्वजीविततृतीयभागशेषायुषः परभवायुर्बध्नन्ति, सोपक्रमायुषः पुनरेत एवैकद्वित्रिचतुःपञ्चेन्द्रियाः स्वायुषस्त्रिभागे शेषे परभवायुर्बध्नन्ति, अथवा—नवमभागे

त्रिभागस्य त्रिभागे इत्यर्थः, सप्तविंशतितमभागे वा नवमभागस्यापि त्रिभागरूपे, तथा च प्रज्ञापना—"सिअत्तिभागे सिअत्तिभागत्तिभागे सिअत्तिभागत्तिभागत्तिभागे" इति । तत्रापि वन्धाच्युता नियमादन्तिमेऽन्तर्मुहूर्त्ते वध्नन्ति, केचित्सप्तविंशतितमभागादूर्ध्वमपि त्रिभागकल्पनां तावद्वर्णयन्ति यावदन्त्योऽन्तर्मुहूर्त्तं इति ॥ २५८ ॥ उक्तो वन्धकालोऽवाधकालान्तसमयावाह—

जइमे भागे वंधो, आउस्स भवे अबाहकालो सो ।
अंते उजुगइ इगसमय, वक्क चउपंचसमयंता ॥ २५९ ॥

व्याख्या—यस्य जन्तोर्यावति षण्मासादौ त्रिभागादौ वा आयुषो भागे शेषे परभवायुषो वन्धः स तस्य तावान् वन्धोदययोरपान्तरालकालोऽनुदयावस्थारूपोऽवाधाकालो भवेत् । तथाऽन्तसमयः—आयुषो निष्ठासमयो यदनन्तरं परभवायुरुदयमायाति; तस्मिंश्च सति परभवं गच्छतां जन्तूनां गतिर्द्विधा—ऋज्वी वक्रा च, तत्र ऋज्वी एकसमया, समश्रेणिव्यवस्थितत्वेनोत्पत्तिदेशस्याद्यसमये एव प्राप्तेः, वक्रा तु वाहुल्येनोत्कर्षतश्चतुःसमयान्ता, क्वचित् कदाचित्पञ्चसमयान्ताऽपि, एतच्चानन्तरमेव भावयिष्यते ॥ २५९ ॥ अथास्मिन्नेव गतिद्वये निश्चयव्यवहारनयाभ्यां परभवायुरुदयं परभवाहारं च चिन्तयन्नाह—

उज्जुगइ पढमसमए, परभविअं आउअं तहाऽऽहारो ।
वक्काएँ बीअसमए, परभविआउं उदयमेइ ॥ २६० ॥

व्याख्या—ऋजुगतौ प्रथमसमये एय पारभविकमायुरुदयमागच्छति, प्रथमसमय एव च परभवाहारः, तथाहि—निश्चयनयेन परभवप्रथमसमय एव पूर्वशरीरशाटो, यस्मिन्नेव समये सर्वात्मना पूर्वशरीरत्यागस्तस्मिन्नेव गतिः, एवं च तस्मिन्नेवाद्यसमये परभवायुरुदयः, ऋजुगत्या चाद्यसमये एव जन्तुरुत्पत्तिदेशमासादयति, तद्गतांश्च स्वशरीरयोग्यान् पुद्गलानादत्ते, ततः सिद्धः प्रथमसमये एव परभवाहारोऽपि, यद्यपि च वक्रगतावपि निश्चयनयादुक्तनीत्या प्रथमसमये एव परभवायुरुदयः, तमन्तरेण सर्वात्मना पूर्वशरीरत्यागासम्भवतो गतेरभावात्, तथापि केचित्परिस्थूलव्यवहारनयाश्रिता वक्रगतौ द्वितीयसमये परभवायुरुदेतीतिप्रतिपन्नास्ततस्तन्मतेनाह—'वक्काए' इत्यादि, वक्रायां गतौ द्वितीयसमये पारभविकमायुरुदयमेति, अयमभिप्रायः—किल प्राग्भवान्त्यसमये एव वक्रा गतिः प्रतिपत्तुमारब्धा, तत्परिणामाभिमुखत्वात्, ततः सोऽपि समयो वक्रगतिसम्बधी द्रष्टव्यः, द्वितीये च समये परभवायुरुदय इति सिद्धं वक्रगतौ प्राग्भवान्त्यसमयापेक्षया द्वितीयसमये परभवायुरुदेतीति । अस्यां च वक्रगतौ स्थितो जन्तुरेकेन द्वाभ्यां त्रिभिश्चतुर्भिर्वा वक्रैरुत्पत्तिदेशमासादयति, तत्रैकवक्रायां गतौ समयद्वयेऽपि नियमादाहारकः, तथाहि—आ-

द्यसमये पूर्वशरीरमोक्षस्तस्मिंश्च समये तच्छरीरयोग्याः केचित्पुद्गला जीवयोगाल्लोमाहारतः सम्वन्धमायान्ति, औदारिकवैक्रियाहारकपुद्गलादानं चाहारस्ततः आद्यसमये आहारकः, द्वितीये च समये उत्पत्तिदेशे तद्भवयोग्यपुद्गलादानादाहारकः। द्विवक्रायां त्रयः समयाः, तत्राद्ये अन्त्ये च प्राग्वदाहारको मध्यमे त्वनाहारकः, त्रिवक्रायां चत्वारः समयास्तथाहि—त्रसनाड्या वहिरधस्तनभागादूर्ध्वमुपरितनभागादधो वा समुत्पद्यमानो जन्तुर्विदिशो दिशि यदोत्पद्यते तदैकेन समयेन विदिशो दिशि याति, द्वितीयेन त्रसनाडीं प्रविशति, तृतीयेनोपर्यधो वा याति, चतुर्थेन वहिरुत्पद्यते, दिशो विदिश्युत्पादे त्वाद्ये समये त्रसनाडीं प्रविशति, द्वितीये उपर्यधो वा याति, तृतीये वहिर्गच्छति, चतुर्थे विदिश्युत्पद्यते, अत्राद्यन्तयोः प्राग्वदाहारको मध्यमयोस्त्वनाहारकः, चतुर्वक्रायां पञ्च समयाः, ते च त्रसनाड्या वहिरेव विदिशो विदिश्युत्पादे प्राग्वद्भावनीयाः, अत्राप्याद्यन्तयोराहारकस्त्रिषु त्वनाहारकः ॥ २६० ॥
एतदेवाह—

इगदुतिचउवक्कासुं, दुगाइसमएसु परभवाहारो ।
दुगवक्काइसु समया, इग दो तिन्नि अ अणाहारा ॥ २६१ ॥

व्याख्या—एकद्वित्रिचतुर्वक्रासु वक्रगतिषु द्वितीयादिषु समयेषु परभवाहारः, तद्यथा—एकवक्रायां द्वितीये,

द्विवक्रायां तृतीये, त्रिवक्रायां चतुर्थे, चतुर्वक्रायां पञ्चमे समये परभवाहारः । तत्रैकवक्रायामुक्तनीत्या समयद्वयेऽप्याहारः, द्विवक्रादिषु तु वक्रगतिषु क्रमादेको द्वौ त्रयश्च समया अनाहारा, न विद्यते आहार एष्विति, यद्वा एकं द्वौ त्रीन् समयान् जीवा अनाहाराः, एतद्गाथार्थश्च प्रागेव भावितः । तदेवं चिन्तितौ निश्चयत ऋजुगत्यां व्यवहारतस्तु वक्रगत्यां परभवायुराहारौ, यदि पुनर्वक्रगतावपि निश्चयतस्तौ चिन्त्येते तदाऽस्यामप्याद्यसमये एव परभवायुरुदयस्तथाहि—यद्यपि प्राग्भवान्त्यसमये वक्रगतिप्रतिपत्तेरभिमुखो जन्तुस्तथापि प्राग्भवसम्बन्धिनोः संघातपरिशाटयोस्तत्र भावात् प्राग्भवसम्बन्ध्येवासौ समयः, तदनन्तरसमये तु प्राग्भवसम्बन्धिनः शरीरस्य सर्वथा शाटः, तथा चागमः—"परभवपढमे साडो"त्ति, ततश्चास्मिन्नेवानन्तरसमये परभवायुरुदेतीति सिद्धः ऋजुगतिवद्वक्रगतावप्याद्यसमये एव परभवायुरुदयः, आहारस्त्वेकवक्रायां गतौ द्वितीये समये, तस्मिन्नेवोत्पत्तिदेशावाप्तेः, प्रथमसमयस्त्वनाहारः, तत्र सर्वात्मना पूर्वशरीरस्य त्यागादुत्पत्तिदेशस्य चाप्राप्तेः, एवं द्विवक्रायां तृतीये, त्रिवक्रायां चतुर्थे, चतुर्वक्रायां च पञ्चमे समये आहारः, ततः स्थितमिदम्—उत्कर्षेण व्यवहारतस्त्रयो निश्चयतस्तु चत्वारः समया अनाहारा इति । प्रभूतं चात्र वाच्यं, तच्च मन्दमतिव्यामोहभयान्नाभिधीयते ॥ २६१ ॥ अथ गाथाद्वयेनापवर्त्तनमाह—

बहुकालवेअणिज्जं, कम्मं अप्पेण जमिह कालेण ।

वेइज्जइ जुगवं चिअ, उइन्नसव्वप्पएसग्गं ॥ २६२ ॥
अपवत्तणिज्जमेअं, आउं अहवा असेसकम्मंपि ।
बंधसमएवि बद्धं, सिढिलं चिअ तं जहाजोग्गं ॥ २६३ ॥

व्याख्या—प्रभूतकालवेद्यमपि यदायुः कर्म इह—जगति तिर्यग्भिर्नरैर्वाऽपवर्त्तनाकरणवशात् युगपदुदीर्णसर्वप्रदेशाग्रं स्वल्पेनैव कालेन वेद्यते—अनुभूय निर्जीर्यते, एतदायुःकर्म्मापवर्त्तनीयमुच्यते, न चैवमायुरेवैकमपवर्त्तनीयं, किंतूक्तनीत्या समस्तजन्तूनां शेषकर्म्माण्यपीत्याह—'अहवेत्यादि' स्पष्टं, न चैवं यथाबन्धमवेदनाद्यथावेदनमबन्धाच्च कृतनाशाकृताभ्यागमदोषप्रसङ्गः, यत आह—'बंधसमयेऽपि' बंधकालेऽपि तदपवर्त्तनीयमायुरशेषमपि वा कर्म यथायोग्यमपवर्त्तनीयतायोग्यदेशकालाद्यनतिक्रमेण शिथिलमेव बद्धं, अयमभिप्रायो—बन्धकालेऽपि तथारूपाध्यवसाययोगात्तत्तथारूपमेव बद्धं येन तं तं देशं कालमध्यवसानादिकं वाऽपेक्ष्यापवर्त्यंत इति ॥ २६२—२६३ ॥ अनपवर्त्तनमाह—

जं पुण गाढनिकायणबंधेणं पुव्वमेव किल बद्धं ।
तं होइ अणपवत्तणजोग्गं कमवेअणिज्जफलं ॥ २६४ ॥

व्याख्या—यत्पुनरायुः शेषं वा कर्म गाढम्–अत्यर्थं निकाचनम्–अवश्यवेद्यतयाऽवस्थापनं तच्च तद्बन्धश्च तेन गाढनिकाचनबन्धेन पूर्वमेव किल बद्धं तद्भवत्यनपवर्त्तनयोग्यं, अत एव क्रमेण–परिपाट्या वेदनीयं–वेद्यं फलं यस्येति क्रमवेदनीयफलम् ॥ २६४ ॥ अत्रायुश्चिन्तायां देवा नारका उत्तमपुरुषाश्चरमशरीरा असंख्यातवर्षायुस्तिर्यङ्नराश्चानपवर्त्तनीयायुषः शेषास्तूभयथाऽपि, एतदेवाह—

उत्तमचरमसरीरा, सुरनेरइआ असंखनरतिरिआ ।
हुंति निरुवक्कमाउ, दुहावि सेसा मुणेअव्वा ॥ २६५ ॥

उक्तार्थो, नवरं उत्तमपुरुषाश्चक्रवर्त्त्यादयः चरमशरीरास्तद्भवमोक्षगामिनः ॥ २६५ ॥ उपक्रमानुपक्रमावाह—

जेणाउमुवक्कमिज्जइ, अप्पसमुत्थेण इअरगेणावि ।
सो अज्झवसाणाई, उवक्कमोऽणुवक्कमो इअरो ॥ २६६ ॥

व्याख्या—येनात्मसमुत्थेन–अध्यवसानादिना इतरकेणापि–बाह्येन विषाग्निशस्त्रादिना आयुरुपक्रम्यते–दीर्घकालवेद्यं स्वल्पकालवेद्यतया व्यवस्थाप्यते, सोऽपवर्त्तनहेतुरध्यवसानादिरुपक्रमो वेदितव्यः, इतरस्तु तद्विपरीतोऽनुपक्रमः ॥ २६६ ॥ तत्रोपक्रमः सप्तधा, तदाह—

अज्झवसाण १ निमित्ते २, आहारे ३ वेअणा ४ पराघाए ५, ।
फासे ६ आणापाणू ७, सत्तविहं झिज्झए आउं ॥ २६७ ॥

व्याख्या—आयुः क्षीयते—क्षयं याति शीघ्रं ध्वंसत इत्यर्थः, कथं ? सप्त विधाः—प्रकारा यत्र क्षपणे तत्सप्तविधं क्रियाविशेषणमेतत्, प्रकारानेवाह—अध्यवसाने—रागस्नेहभयरूपेऽत्यन्तमन्तर्विकल्पे सति, तत्र रागादायुःक्षयो यथा—कस्याश्चित् प्रपापालिकायास्तरुणमनुरागतः पश्यन्त्याः, स्नेहादायुःक्षयो यथा—कस्याश्चित् सार्थवाह्याः देशान्तराद्बहिः समागते सार्थवाहे मित्रैः स्नेहपरीक्षार्थं विपन्ने कथिते सार्थवाह्याः, सार्थवाहीविपत्तिकथने च सार्थवाहस्यापि, भयादायुःक्षयो यथा—वासुदेवदर्शनात् गजसुकुमारश्वशुरस्य सोमिलस्य, 'निमित्ते' दण्डकशाशस्त्ररज्ज्वादिके २, 'आहारे' सर्वथा संपन्ने अतिस्निग्धे अतिमात्रे वा ३, 'वेदनायां' शूलादिकायां ४, 'पराघाते' गर्त्ताप्रपातादिसमुत्थे ५, 'स्पर्शे' त्वग्निविषमसर्प्पादिसत्के ६, 'प्राणापाने' उच्छ्वासनिःश्वासरूपेऽत्यन्तं प्रसर्प्पति निरुद्धे वा सतीति ७, एतैश्चोपक्रमैरपवर्त्तनयोग्यमेवायुरुपक्रम्यते नेतरत्, तथैते उपक्रमाश्चरमशरीरिणामपि केषाञ्चित् स्कन्दकाचार्यशिष्याणामिव सम्भवन्ति, पीडां च जनयन्ति, न पुनरायुरपवर्त्तयन्ति, केवलमुपक्रमहेतुसंपर्कमात्रात्तेऽपि सोपक्रमायुष इव प्रतिभासन्ते ॥ २६७ ॥ अथ यावत्संख्याः पर्याप्तयो भवन्ति, यावत्यश्चैकेन्द्रियादीनां तदाह—

आहार[1] सरीरिंदिअ[2], पज्जत्ती[3] आणपाण[4] भासमणे[5] ।
चउ पंच पंच छप्पिअ, इगविगलासन्निसन्नीणं ॥ २६८ ॥

व्याख्या—पर्याप्तिः—आहारादिपुद्गलग्रहणपरिणमनहेतुरात्मनः शक्तिविशेषः,सा च पुद्गलोपचयादुपर्चीयते, ताश्च पर्याप्तय आहारशरीरेन्द्रियानापानभाषामनोविशेषणाः षट् । तत्राहारपर्याप्तिः—यया शक्त्या करणभूतया जन्तुराहारमादाय खलरसरूपतया परिणमयति १, शरीरपर्याप्तिः—यया रसीभूतमाहारमौदारिकवैक्रियाहारकशरीरत्रययोग्य-पुद्गलरूपं रसासृग्मांसमेदोऽस्थिमज्जाशुक्ररूपसप्तधातुतया यथासम्भवं परिणमयति २, इन्द्रियपर्याप्तिः—यया धातुरूपतया परिणमितादाहारादेकस्य द्वयोस्त्रयाणां चतुर्णां पञ्चानां वा इन्द्रियाणां योग्यान् पुद्गलानादाय स्वस्वेन्द्रियरूपतया परिणमय्य च स्वं स्वं विषयं परिज्ञातुं प्रभुर्भवति ३, प्राणापानपर्याप्तिः—यया उच्छ्वासनिःश्वासयोग्यं दलिकमादाय तथा परिणमय्यालम्ब्य च निःस्रष्टुं समर्थो भवति ४, भाषापर्याप्तिः—यया भाषायोग्यं दलिकमादाय भाषात्वेन परिणमय्यालम्ब्य च मुञ्चति ५, मनःपर्याप्तिस्तु—यया मनोवर्गणादलिकमादाय मनस्त्वेन परिणमय्यालम्ब्य च मननसमर्थो भवति ६, एताश्च पर्याप्तयः सर्वा अप्युत्पत्तिप्रथमसमये एव यथास्वं युगपज्जन्तुना निष्पादयितुमारभ्यन्ते, क्रमाच्च निष्ठामुपयान्ति, यथा—प्रथममाहारपर्याप्तिस्ततः शरीरपर्याप्तिरित्यादि । आहारपर्याप्तिश्च प्रथमसमये

एव निष्पद्यते, तथा च प्रज्ञापनायामाहारपदे द्वितीयोद्देशके सूत्रम्—“आहारपज्जत्तीए अपजत्तएणं भन्ते ? किं आहारए अणाहारए ?, गोअमा !, नो आहारए अणाहारए” इति, आहारपर्याप्त्याऽपर्याप्तश्च विग्रहगतावेवोत्पद्यते नोपपातक्षेत्रमागतः, तत्र प्रथमसमये एवाहारकत्वात्, यदुक्तं प्राक्—‘विग्गहगइमावन्ना, केवलिणो समोहया अजोगी अ। सिद्धा य अणाहारा, सेसा आहारगा जीवा ॥ १ ॥’ यदि पुनरुपपातक्षेत्रमागतोऽप्याहारपर्याप्त्याऽपर्याप्तः स्यात्तदैवमुत्तरसूत्रं स्यात् ‘सिअ आहारए सिअ अणाहारए’ यथा शरीरादिपर्याप्तिषु ‘सिअ आहारए सिअ अणाहारए’ इति, शेषास्तु पञ्चाप्यौदारिकशरीरिणां प्रत्येकमसङ्ख्यातसमयप्रमाणेनान्तर्मुहूर्त्तेन निष्पद्यन्ते, वैक्रियाहारकशरीरिणां तु शरीरपर्याप्तिरन्तर्मुहूर्त्तेन शेषाः सर्वा अप्येकैकेनैव समयेन, सर्वासामपि च पर्याप्तीनां परिसमाप्तिकालोऽन्तर्मुहूर्त्तमेवेति। तथैकेन्द्रियाणामाद्याश्चतस्रः पर्याप्तयः, विकलानां द्वित्रिचतुरिन्द्रियाणां भाषासहिताः पञ्च, असंज्ञिनामपि संमूर्च्छिमपञ्चेन्द्रियतिर्यङ्नराणां ता एव पञ्च, तथा च मूलटीकायां हरिभद्रसूरिः—“संमुच्छिमाणवि पंच हवंति, असन्नित्तणओ, जं पुण संमुच्छिममच्छा महल्लप्पमाणा समुद्दे आहारनिमित्तं मुहुग्घाडणसंमिल्लाणं करिंति, आहारसन्नेव तेसिं, अहवा थोअमणोदव्वलद्धिमत्तणओ असन्निणो पवुच्चंति”त्ति। संज्ञिनां गर्भजपञ्चेन्द्रियतिर्यङ्नरदेवनारकाणां मनःसहिताः षडपि। एताभिश्च स्वस्वयोग्यपर्याप्तिभिरपर्याप्ता एव ये कालं कुर्वन्ति तेऽप्याद्यपर्याप्तित्रयं

समाप्य ततोऽन्तर्मुहूर्त्तेनायुर्बद्ध्वा तदनन्तरमबाधाकालरूपमन्तर्मुहूर्त्तं जीवित्वैव च म्रियन्त इति ॥ २६८ ॥ पर्याप्तेरेव स्वरूपमाह—

आहारसरीरिंदिअ, ऊसासवउमणोऽभिनिवत्ती ।
होइ जओ दलिआओ, करणं पइ सा उ पज्जत्ती ॥ २६९ ॥

व्याख्या—आहारशरीरेन्द्रियोच्छ्वासवचोमनसामभिनिर्वृत्तिः—निष्पत्तिर्यतो दलिकाद्—दलभूतात् पुद्गलसमूहाद्भवति तस्य दलिकस्य तामेवाहाराद्यभिनिर्वृत्तिं—स्वस्वविषयपरिणमनरूपां प्रति यत् करणं जीवसम्बन्धिशक्तिरूपं सा पर्याप्तिः ॥ २६९ ॥ अथ प्राणसंख्यां दर्शयन् यस्य जन्तोर्यावन्तः प्राणा भवन्ति तस्य तावत आह—

पणइंदिअतिबलूसा, आउअ दस पाण चउछसगअट्ठ ।
इगदुतिचउरिंदीणं, असन्निसन्नीण नव दस य ॥ २७० ॥

व्याख्या—पञ्चेन्द्रियाणि त्रीणि मनोवाक्कायरूपाणि बलानि उच्छ्वास आयुश्चेति दश प्राणा भवन्ति, येषां धारणादात्मा प्राणीत्युच्यते, यद्वियोजनाच्च हिंसाव्यपदेशः, यदुक्तम्—"पञ्चेन्द्रियाणि त्रिविधं बलं च, उच्छ्वासनि-

श्वासमथान्यदायुः । प्राणा दशैते भगवद्भिरुक्तास्तेषां वियोजीकरणं च हिंसा ॥ १ ॥ तत्रैकद्वित्रिचतुरिन्द्रियाणां क्रमात् चत्वारः, षट्र सप्ताष्टौ च प्राणा भवन्ति, तथाहि—एकेन्द्रियाणां स्पर्शनेन्द्रियं काय उच्छ्वास आयुश्चेति चत्वारः प्राणाः, द्वीन्द्रियाणामधिके रसनेन्द्रिये वचने च षट्र, त्रीन्द्रियाणामधिके घ्राणेन्द्रिये सप्त, चतुरिन्द्रियाणामधिके चक्षुरिन्द्रियेऽष्टौ, तथा असंज्ञिनां संज्ञिनां च नव दश च प्राणाः क्रमाद्भवन्ति, तत्रासंज्ञिनां संमूर्च्छिमपञ्चेन्द्रियतिर्यङ्नराणामधिके श्रोत्रेन्द्रिये नव, संज्ञिनां गर्भजपञ्चेन्द्रियतिर्यङ्नराणां देवनारकाणां च मनस्यधिके दशापि प्राणा इति ॥ २७० ॥ अथैतां संग्रहणीं समर्थयन् यत उद्धृत्य येन यदर्थमियं निर्मिता तदाह—

संखित्ता संगहणी, गुरुतरसंगहणिमज्झओ एसा ।
सिरिसिरिचंदमुणिंदेण णिम्मिआ अत्तपढणट्ठा ॥ २७१ ॥

व्याख्या—इयं पूर्वं भगवता जिनभद्रगणिक्षमाश्रमणेन बुद्धिमन्थेन निर्म्मथ्य श्रुताम्भोधिं सुधेवोद्धृता भव्योज्जीवनी संक्षिप्तसंग्रहणी, सा च मूलटीकागताभिरन्यान्याभिश्च प्रक्षेपगाथाभिर्वृद्धिं नीयमानाऽधुना यावत् किञ्चिन्न्यूनचतुःशतीमाना पञ्चशतीमाना च गुरुतरा संजाता, ततस्तन्मध्यादुद्धृत्यार्थजातं श्रीहर्षपुरीयगच्छाम्बरशशाङ्केन भगवता श्रीश्रीचन्द्रनाम्ना मुनीन्द्रेण 'एषा' व्यावर्ण्यमानस्वरूपा संग्रहणी निर्मिता, तत्र शास्त्रान्तरेषु प्रज्ञापनादिषु विस्तरेणाभिहिता अर्थाः संक्षिप्य गृह्यन्ते प्रतिपाद्यत्वेनाभिधीयन्तेऽस्यामिति ग्रहेरणि(उ०६३८)रित्यौणादिकेऽणिप्रत्यये

संग्रहणिः इतोऽक्त्यर्थादिति (सि०२-४-३२) विकल्पेन ङीप्रत्यये च संग्रहणी, किंभूता? 'संक्षिप्ता' किञ्चिदूनचतुःशतप्रमाणसंग्रहणीगतस्य पञ्चशतप्रमाणसंग्रहणीगतस्य च सामस्त्येन किञ्चित्तदुभयवृत्तिगतस्य किञ्चिदभ्यधिकस्य चार्थस्य संपिण्ड्यास्यामुक्तत्वात्, ननु यदि संक्षिप्तया प्रयोजनं तर्हि मूलसंग्रहण्येवास्तु, किं पुनः प्रयासेन? प्रायस्तस्या अप्येतावन्मात्रत्वात्, तन्न, एतावतोऽर्थजातस्य तस्यामसंपिण्डनात् । ननु संक्षिप्तापि विशेषतः किमर्थं निर्म्मितेत्याह—आत्मपठनार्थं । इयं हि पूज्यैः प्रथमदीक्षितानल्पमेधसोऽस्मदादीननुकम्पयद्भिर्निर्मितेति व्यक्तं विदितमेवास्मदादीनां, तथाप्यत्यन्तनिर्दलितमानत्वेनैतावदप्यौद्धत्यं दूरतः परिहरन्तः पूज्या आत्मपठनार्थं इत्याहुः, आह परः—तथाप्येवंविधमहामतीनां श्रुतनिधीनां नैवमत्यल्पं वचो वक्तुमुचितं, उच्यते, यत एव श्रुतनिधयः अत एव परापरश्रुतगुणनानुचिन्तनादिपराणां तद्गच्छसंघादिव्यापारधुरन्धराणां च तेषामप्येषा शीघ्रगुणनचिन्तनादिभिरुपकारिकैवेत्युचितमेव, एवमुपकारकत्वं च पूज्यैरस्मदादिसमक्षं साक्षादभिहितमिति व्याख्यायते, अन्यथा त्वेवं व्याख्यायमाने व्यक्तमाशातना स्यादिति ॥२७१॥ अथैतस्या अपि सकाशात्संक्षिप्ततरामन्यां संग्रहणिं गाथाद्वयेनाह—

संखित्तयरी उ इमा, सरीरमोगाहणा य संघयणा ।
सन्ना संठाण कसाय, लेस इंदिअ दुसमुग्घाया ॥ २७२ ॥

दिट्ठी दंसण नाणे, जोगुवओगोववायचवणठिई ।
पज्जत्ति किंमाहारे, सन्नी गईआगई वेए ॥ २७२ ॥

व्याख्या—संक्षिप्ततरा तु संग्रहणिरियं—शरीरादिचतुर्विंशतिद्वारात्मिका । तत्र शीर्यत इति शरीरं, तच्च पञ्च-
धा, औदारिकं वैक्रियमाहारकं तैजसं कार्मणं च, एषां कारण (१) प्रदेशसंख्या (२) स्वामि (३) विषय (४)-
प्रयोजन (५) प्रमाणा (६) ऽवगाहना (७) स्थित्य (८) ल्पबहुत्व (९) कृतो भेदः शास्त्रान्तरप्रसिद्धोऽभिधी-
यते—तत्र कारणकृतो भेदो यथा—स्थूलपुद्गलोपचितमूर्त्यौदारिकं न तथा वैक्रियादीनि, 'परं परं सूक्ष्मम्,' (तत्त्वा०
अ० २ सू० ३८) इतिवचनात् १, प्रदेशसंख्याकृतो भेदो यथा-प्रदेशतः परम्परमसङ्ख्येयगुणं प्राक् तैजसात्ततः परमनन्त-
गुणे तैजसकार्मणे २, स्वामिकृतो भेदो यथा—औदारिकं तिर्यङ्मनुष्याणां, वैक्रियं देवनारकाणां तिर्यङ्नराणां च केषा-
ञ्चित्तल्लब्धिमतां, आहारकं चतुर्दशपूर्वविदां, तैजसकार्मणे सर्वसंसारिणां ३, विषयकृतो भेदो यथा—औदारिकस्य तिर्य-
गुत्कृष्टो विषयो विद्याधरानाश्रित्यानन्दीश्वरात्, जङ्घाचारणान् प्रत्यारुचकपर्वतात्, ऊर्ध्वमुभयान् प्रत्यापण्डकवनात्,
वैक्रियस्यासंख्येया द्वीपसमुद्राः, आहारकस्य महाविदेहाः, तैजसकार्मणयोः सर्वलोकः ४, प्रयोजनकृतो भेदो यथा—
औदारिकस्य धर्माधर्मसुखदुःखकेवलज्ञानावाप्त्यादि प्रयाजनं, वैक्रियस्य स्थूलसूक्ष्मैकानेकत्वव्योमक्षितिगमनाद्यनेक-
रूपा विभूतिः, आहारकस्य सूक्ष्मार्थविषयसंशयविच्छेदादिकं, तैजसस्याहारपाकः शापानुग्रहशक्तिश्च, कार्मणस्य

भवान्तरे गतिः ५, प्रमाणकृतो भेदो यथा— उत्कर्षतः सातिरेकयोजनसहस्रमौदारिकं, सातिरेकयोजनलक्षमानं वैक्रियं, हस्तप्रमाणमाहारकं, लोकाकाशप्रमाणे तैजसकार्मणे ६, अवगाहनाकृतो भेदो यथा—सातिरेकयोजनसहस्रमौदारिकं यावत्स्वसङ्ख्येयेषु प्रदेशेष्ववगाढं, तेभ्यो बहुतरेष्वसंख्येयप्रदेशेष्ववगाढं योजनलक्षं वैक्रियं, आहारकमाभ्यामल्पप्रदेशावगाढं, हस्तमात्रत्वात्, तैजसकार्मणे केवलिसमुद्घातमाश्रित्य समस्तलोकाकाशप्रदेशावगाढे ७, स्थितिकृतो भेदो यथा—औदारिकस्य स्थितिर्जघन्याऽन्तर्मुहूर्त्तमुत्कृष्टा त्रीणि पल्योपमानि वैक्रियस्य भवधारणीयस्य जघन्या दश वर्षसहस्राणि उत्कृष्टा त्रयस्त्रिंशत्सागरोपमाणि, उत्तरवैक्रियस्य जघन्याऽन्तर्मुहूर्त्तम् उत्कृष्टा पुनरेवं जीवाभिगमेऽभिहिता—'अंतमुहुत्तं नरएसु, होन्ति चत्तारि तिरिअमणुएसुं। देवेसु अद्धमासो, उक्कोस विउव्वणाकालो ॥१॥' भगवत्यां तु वायुकायिकस्य पञ्चेन्द्रियतिर्यग्मनुष्याणां च उत्कर्षतोऽप्यन्तर्मुहूर्त्तप्रमाणैवोक्तेति, आहारकस्योभयथाऽप्यन्तर्मुहूर्त्तं, तैजसकार्मणे प्रवाहतः सर्वेषामनादि(नी) भव्यानां सपर्यवसाने अभव्यानामपर्यवसाने ८, अल्पबहुत्वकृतस्तु भेदो यथा—सर्वस्तोकमाहारकं, कादाचित्कत्वात्, यदा च संभवति तदा जघन्येनैकं द्वे वा उत्कर्षतो नवसहस्राः, अन्तरं चाहारकस्य जघन्यमेकसमयः, उत्कृष्टं षण्मासाः, आहारकशरीरेभ्यो वैक्रियाण्यसङ्ख्येयगुणानि, सुरनारकाणामसंख्यातत्वात्, तेषां चावश्यं वैक्रियशरीरित्वात्, तेभ्य औदारिकशरीराण्यसंख्येयगुणानि, सकलतिर्यङ्नराणां तत्संभवात्, इह च द्विधा तिर्यञ्चः—प्रत्येकशरीराः साधारणशरीराश्च, तत्र प्रत्येकशरीराणामसंख्यातानां जीवं जीवं प्रत्येकैकशरीरभावा-

दसंख्यातानि शरीराणि, ये तु साधारणशरीरा अनन्तास्तेषामप्यनन्तानामनन्तानामेकैकशरीरभावादसंख्यातान्येव शरीराणि, ततो यद्यप्यनन्तास्तिर्यञ्चस्तथापि सर्वाण्यप्यसंख्येयान्येवौदारिकशरीराणि, तेभ्योऽनन्तगुणानि तैजसकार्मणानि, सर्वसंसारिजीवेषु प्रत्येकं तेषामवश्यंभावात् १। अवगाहना शरीरप्रमाणरूपा, सा च सुरादीनां प्रागुक्ता २। संहननं वज्रर्षभनाराचादि षोढा, तदप्युक्तं ३। संज्ञानं संज्ञा, सा चाहारभयपरिग्रहमैथुनभेदाच्चतुर्विधा ४। संतिष्ठन्तेऽनेनेति संस्थानमाकारः, तच्च द्विधा—जीवानामजीवानां च, तत्र जीवानां षोढा, समचतुरस्रादि, तच्च प्रागुक्तं, अजीवानां तु रूपिणां पञ्चधा, तद्यथा—परिमण्डलं १ वृत्तं २ त्र्यस्रं ३ चतुरस्रं ४ मायतं ५ च, तत्र परिमण्डलं संस्थानं बहिर्वृत्ततावस्थितप्रदेशजनितमन्तःशुषिरं, यथा वलयस्य, तदेवान्तःपूर्णं वृत्तं यथा—कुलालचक्रस्य, त्र्यस्रं त्रिकोणं यथा—शृङ्गाटकस्य, चतुरस्रं चतुष्कोणं यथा—स्तम्भाधारकुम्भिकायाः, आयतं दीर्घं यथा—दण्डकस्य, सर्वाणि चैतानि घनप्रतरभेदात् द्विधा, पुनः परिमण्डलवर्जान्योजप्रदेशजनितानि युग्मप्रदेशजनितानि च, परिमण्डलं तु युग्मप्रदेशजनितमेव। तत्रौजप्रदेशं प्रतरवृत्तं पञ्चाणुनिष्पन्नं पञ्चाकाशप्रदेशावगाढं च, तत्रैकोऽणुर्मध्ये चत्वारश्चतुर्दिशं निरन्तराः स्थाप्यन्ते, युग्मप्रदेशं प्रतरवृत्तं द्वादशप्रदेशं द्वादशप्रदेशावगाढं च, तत्र निरन्तरं चतुर्ष्वाकाशप्रदेशेषु चत्वारोऽणवस्तत्परिक्षेपेण चाष्टौ स्थाप्यते, ओजप्रदेशं घनवृत्तं सप्तप्रदेशं सप्तप्रदेशावगाढं च, तत्र प्रागुक्ते पञ्चप्रदेशे प्रतरवृत्ते-मध्यस्थितस्याणोरुपर्यधस्ताच्चैकैकोऽणुःस्थाप्यते, युग्मप्रदेशं घनवृत्तं द्वात्रिंशत्प्रदेशं द्वात्रिंशत्प्रदेशावगाढं च, तच्चैवं—

पूर्वोक्तस्यैव द्वादशप्रदेशात्मकस्य प्रतरवृत्तस्योपरि द्वादश तत उपर्यधस्ताच्च चत्वारश्चत्वारोऽणवः १। ओजप्रदेशं प्रतरत्र्यस्रं त्रिप्रदेशं त्रिप्रदेशावगाढं च, तत्र तिर्यग् निरन्तरमणुद्वयं विन्यस्य आद्यस्याध एकोऽणुः स्थाप्यते, युग्मप्रदेशं प्रतरत्र्यस्रं षट्प्रदेशं षट्प्रदेशावगाढं च, तत्र तिर्यक् निरन्तरं त्रयोऽणवः स्थाप्यन्ते, तत्र आद्यस्याध उपर्यधोभावेनाणुद्वयं द्वितीयस्य त्वध एकोऽणुः, स्थापना, ओजप्रदेशं घनत्र्यस्रं पञ्चत्रिंशत्प्रदेशं पञ्चत्रिंशत्प्रदेशावगाढं च, तच्चैवं—तिर्यङ् निरन्तराः पञ्चाणवः स्थाप्यन्ते, तेषां चाधोऽधः क्रमेण तिर्यगेव चत्वारस्त्रयो द्वावेकश्चेति पञ्चदशप्रदेशात्मकः प्रतरो जातः, ततस्तस्योपरि सर्वपङ्क्तिष्वन्त्यान्त्यपरित्यागेन दश, तथैव तस्योपरि षट् त्रयः एकश्चेत्यणवः स्थाप्यन्ते, तत्र एवं पञ्चत्रिंशत्प्रदेशा भवन्ति, स्थापना, युग्मप्रदेशं घनत्र्यस्रं चतुष्प्रदेशं चतुष्प्रदेशावगाढं च, तत्र पूर्वोक्तस्य त्रिप्रदेशात्मकस्य प्रतरत्र्यस्रस्य सम्बन्धिन एकस्याणोरुपर्येकोऽणुः स्थाप्यते २। ओजप्रदेशं प्रतरचतुरस्रं नवप्रदेशं नवप्रदेशावगाढं च, तत्र तिर्यङ्निरन्तरं त्रिप्रदेशास्तिस्रः पङ्क्तयः स्थाप्यन्ते, युग्मप्रदेशं प्रतरचतुरस्रं चतुष्प्रदेशं चतुष्प्रदेशावगाढं च, तत्र तिर्यग् निरन्तरं द्विप्रदेशे द्वे पङ्क्ती स्थाप्येते, ओजप्रदेशं घनचतुरस्रं सप्तविंशतिप्रदेशं सप्तविंशतिप्रदेशावगाढं च, तत्र नवप्रदेशस्य प्रतरचतुरस्रस्यैवाध उपरि च नव नवाणवः स्थाप्यन्ते, युग्मप्रदेशं घनचतुरस्रमष्टप्रदेशमष्टप्रदेशावगाढं च, तत्र चतुष्प्रदेशस्य प्रतरचतुरस्रस्यैवोपर्यन्ये चत्वारोऽणवःस्थाप्यन्ते ३। ओजप्रदेशं श्रेण्यायतं त्रिप्रदेशं त्रिप्रदेशावगाढं च, तत्र तिर्यङ्निरन्तरं त्रयोऽणवः स्थाप्यन्ते, युग्मप्रदेशं श्रेण्यायतं तिर्यग्निरन्तराभ्यां

द्वाभ्यामणुभ्यां, स्थापना, ओजप्रदेशं प्रतरायतं पञ्चदशप्रदेशं पञ्चदशप्रदेशावगाढं च, तत्र प्राग्वत्पङ्क्तित्रये पञ्च पञ्चाणवः स्थाप्यन्ते, युग्मप्रदेशं प्रतरायतं षट्प्रदेशं षट्प्रदेशावगाढं च, तत्र प्राग्वत्पङ्क्तिद्वये त्रयस्त्रयोऽणवः स्थाप्यन्ते, ओजप्रदेशं घनायतं च पञ्चचत्वारिंशत्प्रदेशं पञ्चचत्वारिंशत्प्रदेशावगाढं च, तत्र पूर्वोक्तस्यैव पञ्चदशप्रदेशस्य प्रतरायतस्याध उपरि तथैव पञ्चदश पञ्चदशाणवः स्थाप्यन्ते, युग्मप्रदेशं घनायतं द्वादशप्रदेशं द्वादशप्रदेशावगाढं च, तत्र प्रागुक्तस्य षट्प्रदेशस्य प्रतरायतस्योपरि तथैव तावन्तोऽणवः स्थाप्यन्ते ४। प्रतरपरिमण्डलं विंशतिप्रदेशं विंशतिप्रदेशावगाढं च, तत्र प्राच्यादिषु चतसृषु दिक्षु प्रत्येकं चत्वारश्चत्वारोऽणवः स्थाप्यन्ते, विदिक्षु च प्रत्येकमेकैकोऽणुः स्थाप्यते, घनपरिमण्डलं चत्वारिंशत्प्रदेशं चत्वारिंशत्प्रदेशावगाढं च, तत्र तस्या एव विंशतेरुपरि तथैवान्या विंशतिः स्थाप्यते ५। इत्थं चैषां प्ररूपणमितोऽपि न्यूनप्रदेशतायां यथोक्तसंस्थानासंभवात् नचैतान्यतीन्द्रियत्वेनातिशायिगम्यत्वात् सर्वथानुभवमारोपयितुं शक्यन्ते, स्थापनादिद्वारेण तु कथञ्चिच्छक्यानीति तथैव दर्शितानि। एतत्संग्राहिकाश्चेमा उत्तराध्ययननिर्युक्तिगाथाः—" परिमंडले अ वट्टे, तंसे चउरंस आयए चेव। घणपयरपढमवज्जं, ओजपएसे अ जुम्मे अ ॥ १ ॥ पंचगबारसगं खलु, सत्तग बत्तीसगं च वट्टंमि। तिअ छक्कग पणतीसा, चत्तारि अ होंति तंसंमि ॥ २ ॥ नव चेव तहा चउरो, सत्तावीसा य अट्ठ चउरंसे। तिगदुगपन्नरसेव य छच्चेव य, आयए होंति ॥ ३ ॥ पणयाला बारसगं, तह चेव य आययंमि संठाणे। वीसा चत्ताली-

सा, परिमंडलए अ संठाणे ।४।५।" कष्यन्ते हिंस्यन्ते प्राणिनोऽस्मिन्निति कषः—संसारस्तस्याया—लाभाः कषायाः—क्रोधमानमायालोभाः, ते च प्रत्येकमनन्तानुबन्ध्यप्रत्याख्यानप्रत्याख्यानावरणसंज्वलनभेदाच्चतुर्विधाः, तेषां च स्वरूपमिदं—' जलरेणुपुढविपव्वयराईसरिसो चउविहो कोहो। तिणिसलयाकट्ठट्ठिअसेलथंभोवमो माणो ॥१॥ मायावलेहिगोमुत्ति—मिंढसिंगघणवंसिमूलसमा । लोहो हलिद्दखंजण—कद्दमकिमिरागसारिच्छो ॥ २ ॥ पक्खचउमासवच्छरजावज्जीवाणुगामिणो कमसो । देवनरतिरिअनारय—गइसाहणहेयवो भणिआ ॥ ३ ॥" ६। लिप्यते श्लिश्यते जन्तुः कर्म्मणा सहाभिरिति लेश्याः, कृष्णादिद्रव्यसाचिव्यादात्मनः शुभाशुभाः परिणामाः, ताश्च कृष्णनीलकापोततेजःपद्मशुक्लविशेषणाः षट्, आसां च स्वरूपं जम्बूफलखादकानां ग्रामघातकानां वा षण्णां पुरुषाणां दृष्टान्तात् बोद्धव्यं, यथा—" जह जंबुपायवेगो, सुपक्कफलभरियनमिअसाहग्गो । दिट्ठो छहिं पुरिसेहिं, ते बिंती जम्बु भक्खेमो ॥ १ ॥ किह पुण ते बिंतेगो, आरुहणे होज्ज जीवसंदेहो । ता छिंदिऊण मूलाउ, भक्खिमो ताणि पाडेउं ॥२॥ बीआह किमम्हाणं, तरुणा छिन्नेण एमहंतेणं । साला महल्ल छिंदह, तइओ बेइ पसाहाओ ॥ ३॥ गोच्छे चउत्थओ पुण, पंचमओ बेइ गिण्हह फलाइं । छट्ठो बेई पडिआ, एए च्चिअ खायह घेत्तुं ॥ ४ ॥ दिट्ठंतस्सोवणओ, जो बेई एय छिंदिमो मूला। सो वट्टइ किण्हाए, सालमहल्लाउ नीलाए ॥५॥ हवइ पसाहं काऊ, गोच्छा तेऊ फला य पम्हाए । पडिआ य सुक्कलेसा, अहवा अन्नं इमाहरणं ॥ ६ ॥ चोरा गामवहत्थं, विणिग्गया एगु बेइ घाएह । जं पासह



तं सवं, दुपयं चउप्पयं वावि ॥ ७ ॥ बीओ माणुस पुरिसे अ, तइअओ साउहे चउत्थोअ पंचमओ जुज्झंते, छट्ठो पुण तत्थिमं भणइ ॥ ८ ॥ इक्कं ता हरह धणं, बीअं मारेह मा कुणह एअं। केवल हरह धणं ता, उवसंहारो इमो तेसिं ॥ ९ ॥ सवे मारेहत्ती, वट्टइ सो किण्हलेसपरिणामे । एवं कमेण सेसा, जा चरिमो सुक्कलेसाए ॥ १० ॥ आइल्ल तिन्नि इत्थं, अप्पसत्थाउ चरिमपसत्थाओ आइल्ला परिहरिउं, जइअवं उवरिमासुं तु ॥ ११ ॥ ७। 'इदि परमैश्वर्ये' आवरणाभावे सर्वस्यापि वस्तुन उपलम्भतो नानाभवेषु जगत्रयगतवस्तुनो भोगतश्च परमैश्वर्ययोगेन इन्दनादिन्द्रो–जीवस्तस्य लिङ्गं तेन दष्टं सृष्टं वा निपातनादिन्द्रियं—श्रोत्रादि पञ्चविधं, तथा च भगवान् भाष्यकारः—“इंदो जीवो सव्वोवलद्धिभोगपरमेसरत्तणओ । सोत्ताइमेअमिंदिअमिह तल्लिंगाइभावाओ ॥ १ ॥ ” एतत्स्वरूपं च किञ्चिदतिव्यक्ताभिः क्षमाश्रमणगाथाभिरेवाभिधीयते–तन्नामाइचउद्धा, दवं निवत्ति उवगरणं (णयं) च । आगारो निवत्ती, चित्ता बज्झा इमा अंतो ॥ १ ॥ पुप्फं कलंवुआए, धन्नमसूराइमुत्तचंदो अ । होइ खुरप्पो नाणा—गिई अ सोइंदिआईणं ॥ २ ॥ ” अथ श्रोत्रस्यान्तर्निर्वृत्तिः कदम्बपुष्पाकारमांसगोलकरूपा, चक्षुषो धान्यमसूराकारा, घ्राणस्य अतिमुक्तककुसुमचन्द्रकाकारा काहलाकारेति यावत्, रसनस्य क्षुरप्राकारा, स्पर्शनस्य तु नानाकृतिरित्येवं श्रोत्रादीनामन्तर्निर्वृत्तेराकार इति–विसयग्गहणसमत्थं, उवगरणं इन्दिअंतरं तंपि । जं नेह तदुवघाए, गिण्हइ निवत्तिभावेवि ॥१॥ लद्धुवओगा भाविंदिअं तु लद्धित्ति जो खओवसमो । होइ तदावरणाणं, तल्लाभे चेव सेसंपि ॥ ४ ॥

जो सविसयवावारो, सो उवओगो स चेगकालंमि । एगेण चेव तम्हा, उवओगेगिंदिओ सव्वो ॥ ५ ॥ " ८। 'दुमसु-
ग्घाय'त्ति द्वौ समुद्घातौ, तत्राद्यो जीवसम्बन्धी, तथाहि—सम्—आत्मनो वेदनादिभिरेकीभावेन उत्—प्राबल्येन
घातः समुद्घातः, वेदनादिसमुद्घातगतो हि जन्तुर्वेदनाद्यनुभवज्ञानेनैव परिणस्य कालान्तरानुभवयोग्यान् बहून्
वेदनीयादिकर्मप्रदेशानुदीरणाकरणेनोदयावलिकायां प्रक्षिप्यानुभूय च निर्जरयति, आत्मप्रदेशैः सह संश्लिष्टान्
शातयतीत्यर्थः, स च सप्तधा यथा—'वेअण १ कसाय २ मरणंतिए अ ३ वेउव्विए ४ समुग्घाए । तेआ ५ ऽऽहारे
६ तह केवली ७ इअ सत्त नायव्वा ॥ १ ॥' तत्र केवलिसमुद्घातो लोकव्यापी दण्डादिक्रमेण सकललोकस्य पूरणात्,
कालतोऽष्टसामयिकः, शेषाः षडपि प्रत्येकमान्तर्मौहूर्त्तिकाः । स्वामिचिन्तायां नराणां सप्त सुराणामाद्याः पञ्च,
नारकाणां चत्वारस्तेषां तेजोलेश्याया अभावात्, वैक्रियलब्धिमत्संज्ञिपञ्चेन्द्रियवायुवर्जानां तिरश्चामाद्यास्त्रयः,
वैक्रियलब्धिमतां संज्ञिपञ्चेन्द्रियतिरश्चां वायूनां च क्रमात्पञ्च चत्वारश्चेति, यदुक्तं—" वेअण कसायमारण, वेउव्विअ
तेअहारकेवलिआ । सग पण चउ तिन्नि कमा नरसुरनेरइअतिरिआणं ॥ १ ॥ पंचिंदिअतिरिआणं, देवाणवि होंति
पंच सन्नीणं । वेउव्विअवाऊण य, पढमा चउरो समुग्घाया ॥ २ ॥ " द्वितीयस्तु समुद्घातोऽचित्तमहास्कन्धरूपः
केवलिसमुद्घातक्रमेण द्रष्टव्यः, जीवाभिगमे तु प्रथमं समुद्घातद्वारं 'तेसि णं जीवाणं कइ समुग्घाया? इत्यादि व्या-
ख्याय द्वितीयं समुद्घातद्वारं प्रश्नपूर्वमेवं व्याख्यातं, यथा—" ते णं जीवा मारणंतिअसमुग्घाएणं समोहयावि

मरंति, असमोहयावि मरंति'त्ति १०। 'दिट्ठि'त्ति दर्शनं दृष्टिः, सा त्रिधा—सम्यग्दृष्टिर्मिथ्यादृष्टिः सम्यग्मिथ्यादृष्टिश्च ११। 'दंसण'त्ति दर्शनं—वस्तुसामान्यांशग्राहि, तच्चतुर्धा—चक्षुर्दर्शनमचक्षुर्दर्शनमवधिदर्शनं केवलदर्शनं च १२। ज्ञानं वस्तुविशेषांशग्राहि मतिश्रुतावधिमनःपर्यायकेवलभेदात्पञ्चधा १३। योजनं युज्यते धावनवल्गनादिक्रियासु व्यापार्यतेऽसाविति वा युज्यते सम्बध्यते वल्गनादिक्रियया जीवोऽनेनेति वा योगो वीर्यं शक्तिरुत्साहः परिस्पन्द इतियावत्, स च मनोवाक्कायव्यापारभेदात्पञ्चदशधा, तत्र सत्यासत्यमिश्रानुभयभेदान्मनोयोगश्चतुर्द्धा, एवं वाग्योगोऽपि, काययोगस्तु सप्तधा—औदारिक औदारिकमिश्रः वैक्रियो वैक्रियमिश्रः आहारकः आहारकमिश्रः कार्मणश्चेति १४। उपयोजनं उपयुज्यते वस्तुपरिच्छेदं प्रति व्यापार्यतेऽसाविति अनेनेति वा उपयोगो जीवस्वतत्त्वभूतो बोधः, स च साकारोऽनाकारश्च, तत्र साकारः पञ्च ज्ञानानि त्रीणि च मत्यज्ञानश्रुताज्ञानविभङ्गरूपाण्यज्ञानानीत्यष्टधा। अनाकारस्तु चक्षुर्दर्शनादिश्चतुर्द्धा १५। उपपातं च्यवनं चेतिद्वारद्वयं विरहकालमेकसमयसङ्ख्यां चाधिकृत्य प्राग् व्याख्यातं १६।" स्थितिः १८ पर्याप्तयः १९ इत्यपि द्वारद्वयं प्रागेवोक्तं 'किमाहारे'त्ति आहारयतीत्याहारकः, ततः किमाहारकोऽनाहारको वा जीवः? यद्वा किंस्वरूपः सचित्तादिः? केन वा शरीरेणाहारोऽस्येति किमाहार इत्यप्युक्तमेव, के जीवाः कतिभ्यो दिग्भ्य आगतानि द्रव्याण्याहारयन्तीत्यादिप्रपञ्चस्तु जीवाभिगमाद्बोद्धव्यः २०। संज्ञाऽस्यास्तीति संज्ञी पञ्चेन्द्रियो मनःपर्याप्त्या पर्याप्तः, इतरे तु पृथिव्यादयः

संमूर्च्छिमपञ्चेन्द्रियान्ता असंज्ञिनः । ननु प्रज्ञापनायामेकेन्द्रियादीनामप्याहार १ भय २ मैथुन ३ परिग्रह ४ क्रोध-५ मान ६ माया ७ लोभ ८ ओघ ९ लोक १० रूपा दशविधा संज्ञोक्ता, ततस्तेऽपि संज्ञिनः प्राप्नुवन्ति, उच्यते, दशविधाऽपीयमोघसंज्ञारूपत्वात् स्तोका, तथाभूताऽपि मोहोदयजन्यत्वादशोभना, अतो नानयाऽधिकारः, किं तु महत्या शोभनया च विशिष्टज्ञानावरणकर्मक्षयोपशमजन्यया मनोज्ञानसंज्ञयैवेति, तथा चामुमेवार्थं सदृष्टान्तं भगवान् क्षमाश्रमण आह—जइ सन्नासंबंधेण, सन्निणो तेण सन्निणो सव्वे । एगिंदिआइआणवि, जं सन्ना दसविहा भणिआ ॥ १ ॥ थोवा न सोहणाविअ, जं सा तो नाहिकीरए इहइं । करिसावणेण धणवं, न रूववं मुत्तिमित्तेणं ॥ २ ॥ जह बहुदव्वो धणवं, पसत्थरूवो अ रूववं होइ । महईए सोहणाए अ, तह सन्नी नाणसन्नाए ॥ ३ ॥ " अथवा–संज्ञी त्रिविधो दीर्घकालिक्युपदेशेन १ हेतुवादोपदेशेन २ दृष्टिवादोपदेशेन च ३, तत्र यः सुदीर्घमपि कालमतीतमर्थं स्मरति भविष्यच्च वस्तु चिन्तयति कथं नु नाम कर्त्तव्यमिति ? स प्रथमः । यदुक्तम्–" इह दीहकालिगी कालिगि–त्ति सन्ना जया सुदीहंपि । संभरइ भूअमेस्सं, चिन्तेइ अ किह णु कायव्वं ? ॥१॥" यस्तु संचिन्त्य इष्टानिष्टेषु छायाऽऽतपादिवस्तुषु स्वदेहपालनाहेतोः प्रवृत्तिनिवृत्ती विधत्ते स द्वितीयः, यदाह—" जे पुण संचिंतेउं, इट्ठाणिट्ठेसु विसयवत्थूसुं । वट्टंति नियत्तंति अ, सदेहपरिपालणाहेउं ॥ १ ॥ पाएण संपए च्चिअ, कालंमि नयाइदीहकालन्ना । ते हेउवायसन्नी, निच्चिट्ठा होंति हु असन्नी ॥ २ ॥ " तृतीयस्तु संज्ञी सम्यग्दृष्टिरेव, शेषा-

स्त्वसंज्ञिनो, हिताहितप्राप्तिपरिहारयोः सम्यग्दृष्टिसाध्ययोस्तेषामभावात्, तथा चाह—"सम्मदिट्ठी सन्नी, संते नाणे खओवसमियंमि। असन्नी मिच्छत्तंमि दिट्ठिवाओवएसेणं ॥ ३ ॥" अथैतासां मध्ये कस्य जन्तोः का संज्ञा भवतीति व्यक्ताभ्यां क्षमाश्रमणगाथाभ्यामेव प्रदर्श्यते—" पंचण्हमूहसन्ना, हेऊसन्ना बिइंदिआईणं। सुरनारयगब्भुब्भवजीवाणं कालिगीसन्ना ॥ १ ॥ छउमत्थाणं सन्ना, सम्मदिट्ठीण होइ सुअनाणं। मइनाणावरविमुक्का, सन्नाईआ उ केवलिणो ॥ २ ॥ " अत्र 'पंचण्हमूहसन्न'त्ति पञ्चानां—पृथिव्यादीनामूहसंज्ञा वृत्त्यारोहणाद्यभिप्रायरूपा ओघसंज्ञा, पृथिव्यप्तेजोवायुवनस्पतीनामाहारादिसंज्ञोपलक्षकमोघसंज्ञामात्रमेव न दीर्घिक्यादिसंज्ञात्रयमित्यर्थः २१। गतिरागतिश्च प्राग्व्याख्याता, जीवाभिगमे तु सूक्ष्मपृथिवीकायिकादयो जीवाः केभ्यो जीवेभ्य उद्वृत्योत्पद्यन्त इत्युपपातः, त एव स्वभवाच्च्युता आनन्तर्येण केषु जीवेषूत्पद्यन्त? इतिच्यवनं, तथैते कतिषु गतिषु गच्छन्तीति गतिः, कतिभ्यो गतिभ्य आगच्छन्तीत्यागतिश्चाभिहिता, तत्र गत्यागतिसूत्रं दिङ्मात्रं यथा—" सुहुमपुढविकाइआ दुगइआ दुआगइआ, बायरपुढविकाइआ दुगइआ तिआगइआ " इत्यादि २३। वेदद्वारमपि प्राक् प्रपञ्चितमेव २४। तदेवं व्याख्याता चतुर्विंशतिद्वारात्मिका गाथाद्वयप्रमाणा संक्षिप्ततरा संग्रहणिः, तद्व्याख्यानाच्च श्रीहर्षपुरीयगच्छालङ्कारमलधारिश्रीमदभयदेवसूरिपट्टरत्नश्रीहेमचन्द्रसूरिशिष्यश्रीचन्द्रसूरिचरणाम्बुजचञ्चरीकेण श्रीमुनिचन्द्रसूरिभ्यो लब्धप्रतिष्ठेन श्रीदेवभद्रसूरिणा विरचिता स्वगुरुप्रणीतसंग्रहण्याः वृत्तिः समर्थिता ॥

अङ्गान्युपाङ्गानि तथाऽपराणि, विलोक्य शास्त्राणि गुरूपदेशतः । विनिर्म्मिता वृत्तिरियं तथापि, शोध्यं यदि स्याद्विबुधैर्विशोध्यम् ॥ १ ॥ निजगुरुपदभक्तेः कुर्वतो वृत्तिमेनां, मम समजनि पुण्यं यत्ततो भव्यलोकः । जिनपतिव्रतपोतोत्तीर्णसंसारसिन्धुर्व्रजतु शिवमनन्तं ज्ञानदृग्वीर्यसौख्यम् ॥ २ ॥ प्रत्यक्षरगणनातो, ग्रन्थमानं विनिश्चितम् । पञ्चत्रिंशच्छतान्यत्र, श्लोकानां सर्वसंख्यया ॥ ३ ॥ ग्रन्थाग्रं ३५०० । श्रीरस्तु ॥

सम्पूर्णम् ।

इति श्रीश्रीचन्द्रीया संग्रहणिः समाप्ता.

# શ્રી જિનશાસન આરાધના ટ્રસ્ટ

## પ્રકાશિત ગ્રંથો.



૧. જીવવિચાર દંડક પ્રકરણ સટીક.
૨. ન્યાયસંગ્રહ સ્વોપજ્ઞ ટીકા.
૩. ધર્મસંગ્રહ સ્વોપજ્ઞ ટીકા ભાગ-૧.
૪. ધર્મસંગ્રહ સ્વોપજ્ઞ ટીકા ભાગ-૨
૫ ધર્મસંગ્રહ સ્વોપજ્ઞ ટીકા ભાગ-૩.
૬. જીવસમાસ ટીકાનુવાદ.
૭. જંબુદ્વિપ સંગ્રહણી સટીક.
૮. સ્યાદ્વાદ મંજરી સાનુવાદ.
૯. અભિધાન વ્યુત્પત્તિ પ્રક્રિયા કોષ ભાગ-૧.
૧૦. બૃહત સંગ્રહણી સટીક. [દેવભદ્રસૂરિ]
૧૧. નંદીર ગ્ર સટીક.



# પ્રકાશિત થનારા ગ્રંથો

૧. સમરાદિત્ય ચરિત્ર સંસ્કૃત [પ્રદ્યુમ્નસૂરિ]
૨. બૃહત્ક્ષેત્રસમાસ સટિક. [મલયગિરિ મ]
૩. અભિધાન વ્યુત્પત્તિ પ્રક્રિયા કોશ ભાગ-૨
૪. ચેઇય વંદણ મહાભાસં [શાંતિસૂરિ]